# KASHMIR SERIES OF TEXTS

No. X.

THE

# STAVA-CHINTĀMAṆI

OF

## BHAṬṬA NĀRĀYAṆA

WITH COMMENTARY

BY

## KṢHEMARĀJA.

EDITED WITH NOTES

BY

MAHĀMAHOPĀDHYĀYA PAṆḌIT MUKUNDA RĀMA SHÂSTRÎ,
OFFICER-IN-CHARGE RESEARCH DEPARTMENT,
JAMMU AND KASHMIR STATE,
SRINAGAR.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT
OF HIS HIGHNESS LIEUT.-GENERAL MAHĀRĀJA
SIR PRATĀP SINGH SĀHIB BAHĀDUR,
G. C. S. I., G. C. I. E.,
MAHĀRĀJA OF JAMMU AND KASHMIR STATE.




SRINAGAR:
PRINTED AT THE "KASHMIR PRATAP STEAM" PRESS.
1918.

श्रीमच्छ्रीकण्ठनाथप्रभृतिगुरुवरादिष्टसन्नीतिमार्गो
लब्ध्वा यत्रैव सम्यक्पटिमनि घटनामीश्वराद्वैतवादः ।
कश्मीरेभ्यः प्रसृत्य प्रकटपरिमलो रञ्जयन्सर्वदेश्यान्
देशेऽप्यस्मिन्नदृष्टो घुसृणविसरवत्स्तान्मुदे सज्जनानाम् ॥ १ ॥

तरत तरसा संसाराब्धिं विधत्त परे पदे
पदमविचलं नित्यालोकप्रमोदसुनिर्भरे ।
विमृशत शिवादिष्टाद्वैतावबोधसुधारसं
प्रसभविलसत्सद्युक्त्यान्तःसमुत्प्लवदायिनम् ॥ २ ॥

ॐ

काश्मीर-संस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०



# स्तवचिन्तामणिः

श्रीमद्भट्टनारायणविरचितः

श्रीमन्महामाहेश्वराचार्य—श्रीक्षेमराजाचार्यकृतविवृत्युपेतः

श्रीभारतधर्ममार्तण्ड-कश्मीरमहाराज
श्रीप्रतापसिंहवरप्रतिष्ठापिते प्रत्नविद्याप्रकाश-(रिचर्स) कार्यालये
तदध्यक्ष-महामहोपाध्याय-पण्डित-मुकुन्दराम-शास्त्रिणा
उद्दिष्टकार्यालयस्थेतरपण्डितसहायेन
संगृह्य, संशोधन-पर्यायाङ्कन-विवरणादिसंस्करणोत्तरं
पाश्चात्यविद्वत्परिषत्संमताधुनिकसुगमशुद्धरीत्युपन्यासादिसंस्कारैः परिष्कृत्य
काश्मीर-श्रीनगरे श्रीप्रताप स्टीमनाम्नि मुद्रणालये मुद्रापयित्वा
प्राकाश्यं नीतः




संवत् १९७५      ख्रैस्ताब्दः १९१८

काश्मीर-श्रीनगर

स्तवचिन्तामणिग्रन्थे मूलपद्यसूची

इति स्तवचिन्तामणेः श्लोकपरिपाटी समाप्ता ॥

ओं नमः स्वात्मामृतवपुषे परमशिवाय ॥



अथ

# स्तवचिन्तामणिः ।

श्रीभट्टनारायणविरचितः ।

श्रीक्षेमराजकृतविवृत्युपेतः ।



प्रकाशमाने परमार्थभानौ
नश्यत्यविद्यातिमिरे समस्ते ।
तदा बुधा निर्मलदृष्टयोऽपि
किंचिन्न पश्यन्ति भवप्रपञ्चम् ॥ १ ॥

नमः शिवाय सततं पञ्चकृत्यविधायिने ।
चिदानन्दघनस्वात्मपरमार्थावभासिने ॥ २ ॥

अन्तः स्पन्दान्दोलनानन्दसंपद्-
बाह्यस्पन्दामन्दसंदोहिनीभिः ।
संविद्धाराधोरणीभिः समन्तात्
सिञ्चन् विश्वं स्वात्मशंभुर्नमस्यः ॥ ३

पं० १ ग० पु० परमार्थभाने इति पाठः ।
पं० ७ ख० ग० पु० नन्दसर्पत् इति पाठः ।

नारायणः स्वहृदयाम्बुनिधेर्विवेक-
भूभृद्विमर्दरभसोच्छलितं यदेतत्।
श्रीशंकरस्तुतिरसायनमाचकर्ष
तच्चर्वणादिह बुधा विबुधा भवन्तु॥४॥

इह स्तोत्रादौ स्तोत्रकारः सर्वोपनिषत्प्रदर्शितसत्संप्रदायोद्घाटनमुखं स्वात्मपरमार्थपरमेश्वरस्वरूपसमावेशं व्युत्थाने विमृष्टुमाह

सुगिरा चित्तहारिण्या
पश्यन्त्या दृश्यमानया।
जयत्युल्लासितानन्द-
महिमा परमेश्वरः॥ १ ॥

प्रकाशानन्दरूपः परमेश्वरः परमानन्दात्मकस्वातन्त्र्यशक्तिस्वरूपपरावागालिङ्गितमूर्तिः अनयैव शक्त्या शिव-मन्त्रमहेश्वर-मन्त्रेश्वर-मन्त्र-विज्ञानाकलात्मशुद्धाध्वप्रमातृमयीं भारतीं वाचं पश्यन्तीं, मण्डलि-श्रीकण्ठ-क्रोधेश-वीरभद्र-शतरुद्रानन्त-भुवनेश्वरप्रथात्मिकां मध्यमाम्, ए-

तदतिरिक्तभुवनेश्वर-विचित्रप्रलयाकल-सकल-निष्ठां तत्तन्नानारूपप्रपञ्चपराभासां पूर्वपूर्ववाक्छक्तिव्याप्तां वैखरीं च वाचं स्वभित्ताववभासयन्, अवरोहक्रमेण विश्ववैचित्र्यमारचयति। इत्थं च वैखरीप्रधानसकलप्रमातृपदेऽपि यथोक्तव्याप्तिकपर-परापर-मध्यमाख्यवाक्त्रयावियोग एव। अत एव अनुजिघृक्षुः भगवान् वैखरी-मध्यमाप्रशमनपुरःसरं पश्यन्तीदशामुन्मज्जय यथोक्तानाश्रिताशिवपर्यन्तव्याप्तिकां तां वेद्यत्वेन आभास्य वेद्यवेदकस्वात्मसत्ताम् आरोहण-क्रमेण आवेशयन् भक्तिभाजः, सर्वोत्कर्षेण वर्तते,—इत्ययमत्र वाक्यार्थः।

पदार्थस्तु—परमः,—चिदात्मरूपः ईश्वरो जयति—स्वधरान्ताशेषविश्वोत्कर्षेण वर्तते, कीदृक्? वैखरीमध्यमापेक्षया शोभना व्यख्यातपरमार्था या इयम् अविभागाक्रमसततावभासरूपा मध्यमादिवाग्व्यापिनी पश्यन्ती, तया दृश्यमानया—स्फुटम् उन्मग्नरूपत्वेन स्फुरन्त्या, अत

एव बुद्ध्युपारूढसक्रमसंकल्पविकल्पकारि मध्यमात्मकं चित्तं,तदनुषङ्गेण च वर्णव्यञ्जकवैखर्याश्रयं प्राणमपि ताच्छील्येन हरन्त्या–निःशेषं प्रशमयन्त्या, दृश्यमानया च–अनाश्रितपर्यन्ते रूपे वेदकताप्रशमनेन वेद्यात्मनैव अवभासमानया हेतुभूतया उल्लासितः,–प्रत्यभिज्ञापदवीं नीतः परावागात्मा आनन्दमहिमा येन, विकल्पप्रशमनपुरःसरं पश्यन्तीभूमिमुन्मज्ज्य तद्द्वाराधिरूढानाश्रितपदवीमपि वेद्यत्वेन आभास्य परमानन्दात्मकपरमाद्वयपरमप्रमातृतामुन्मीलयन् अनुगृह्णाति परमेश्वर इत्यर्थः। अयमेव च सर्वरहस्येषु सारभूतः समावेशोपाय आम्नातः। यथोक्तं श्रीमालिनीविजये

‘अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः।
उत्पद्यते य आवेशः शांभवोऽसावुदीरितः॥’

इति। अस्मत्परमेष्ठिना श्रीप्रत्यभिज्ञाकृतापि

‘विकल्पहानेनैकाग्र्यात्क्रमेणेश्वरतापदम्।’

पं० १७ क० पु० हानेनैकात्म्यादिति पाठः।

इति । श्रीज्ञानगर्भेऽपि

'विहाय सकलाः क्रिया जननि मानसीः सर्वतो
विमुक्तकरणक्रियानुसृतिपारतन्त्र्योज्ज्वलम् ।
स्थितैस्त्वदनुभावतः सपदि वेद्यते सा परा
दशा नृभिरतन्द्रितासमसुखामृतस्यन्दिनी ॥'

इति । यथा कयाचित् हृदयहारिण्या तरुण्या प्रियतमानुरञ्जकमधुरगिरा परस्परानुरागवशतः साभिलाषं दृश्यमानया, पश्यन्त्या च, उदश्रुद्रोमाञ्चादिसकलसात्त्विकभावदर्शनोन्नीयमानानन्दमहिमा कश्चित् ईश्वरो जयति; तथा व्याख्यातक्रमेणायमपि परमशिवात्मा स्वात्मा,—इत्यनुरणनशक्त्या श्लेषध्वनिः। पश्यन्त्यादीनां स्वरूपं तत्रभवता भर्तृहरिणा उक्तम् , यथा

'अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥
केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥'

इति ॥ १ ॥

एवं शक्तिमत्प्रधानां शांभवीं भुवं स्तुत्वा शक्तिप्रधानां स्तोतुमाह

यः स्फीतः श्रीदयाबोध-
परमानन्दसंपदा ।
विद्योद्द्योतितमाहात्म्यः
स जयत्यपराजितः ॥ २ ॥

स–भगवान् , अपराजितो–विश्वातिशायी जयति,–तमेव उत्कृष्टतया परामृशन्तः समाविशामः । श्रीः–अशेषकारणविभवप्रथाभित्तिः परा चैतन्यलक्ष्मीः, दया–विश्वानुग्रहात्मा परेच्छाशक्तिः, बोधः–ज्ञानशक्तिः, परमानन्दः–स्वातन्त्र्यशक्तिः, संपत्–स्वप्रथारूपसमृद्ध्यात्मा क्रियाशक्तिः, श्रीश्च दया च बोधश्च परमानन्दश्च संपच्च तत् श्रीदयाबोधपरमानन्दसंपत् तेन चिदिच्छा-ज्ञानानन्द-क्रियात्म-स्फार-

रूपेण शक्तिपञ्चकेन यः स्फीतः—परिपूर्णः, तत एव विश्वानुग्रहप्रवणत्वात् विद्यया—'अहमेव सर्वम्' इति अहन्तेदन्तासामानाधिकरण्यप्रथात्मना शुद्धविद्याशक्त्या, उच्चैर्द्योतितं—पराद्वयमयत्वेन अनुग्राह्याणां प्रकटीकृतं माहात्म्यं—ज्ञानक्रियास्फारो येन ॥ २ ॥

एवं शक्तिप्रधानं भगवद्रूपं स्तुत्वा नरप्रधानमपि स्तोतुमाह

प्रसरद्बिन्दुनादाय
शुद्धामृतमयात्मने ।
नमोऽनन्तप्रकाशाय
शंकरक्षीरसिन्धवे ॥ ३ ॥

शं—पराद्वयप्रथारूपं श्रेयः करोति यः स एव स्वच्छत्व-प्रकाशघनत्व-आह्लादकत्वसर्वसंपदास्पदंत्वादिधर्मयोगात् क्षीरसिन्धुरिव, तस्मै नमः—शरीरादिप्रह्वीभावयुक्त्या तदेव तत्त्वं

समाविशाम्मः। कीदृशाय शंकरक्षीरसिन्धवे?—प्र-
सरद्बिन्दुनादाय—प्रसरन्तौ नित्यमेव सदाशिवे-
श्वरादिना वेद्यपर्यन्तेन पराद्वैतप्रथानुप्रविष्टेन
विश्वात्मना रूपेण प्रसरन्तौ बिन्दुनादौ—सामर-
स्यात्मिके ज्ञानक्रियाशक्ती यस्य; तथाहि—प्रका-
शात्मा परमेश्वरः स्वातन्त्र्यशक्त्यपरपर्यायसा-
मरस्यावस्थितज्ञानक्रियाशक्त्यात्मकः स्फुरन्नेव
स्वभित्तौ स्वात्मगोपनारूपामनाश्रितशिवदशा-
मुल्लास्य, ज्ञानशक्तिप्रधानं सदाशिवं, क्रिया-
शक्तिप्रधानम् ईश्वरं, तत्कारणरूपां च शुद्धवि-
द्याम् आभास्य, संकोचाभासरूपां मायाम्, त-
दनु संकुचितज्ञानक्रियाशक्त्यात्मिके विद्याक-
ले प्रदर्श्य, तत्संकोचप्रकर्षात्माबिन्दुनादशब्द-
वाच्यां प्राणापानभूमिं, सकलकरणावलीसमा-
श्रयभूताम् उट्टङ्क्य, पुनरपि ज्ञानक्रियासंकोच-
प्रकर्षयोगिनीमन्तःकरणभूमिम् उल्लास्य, क्रमा-
त्क्रमं तारतम्यप्राप्तसंकोचज्ञानशक्तिमयानि बु-
द्धीन्द्रियाणि बोध्याभासपर्यन्तेन रूपेण प्रथि-

तानि ; तथैव प्रकृष्टसंकोचाक्रियाशक्तिमयानि कर्मेन्द्रियाणि, तद्वदेव उच्चारणीयग्राह्यादि-विषयाभासपर्यन्तानि प्रथयन् , बोध्यकार्यादि-सर्वविषयान् बाह्येन्द्रियप्रकाशैकात्म्यानयनप्रमुखमन्तःकरणप्रकाशमावेश्य, विद्याकलाभूमिकास्पर्शद्वारेण सदाशिवेशपदमावेश्य , स्वस्वातन्त्र्यशक्त्यात्मनैव प्रथयन्, ईदृशावरोहारोहदोलाकेलिं कुर्वन् अनवरतमवस्थितः, नियतिकालरागतत्त्वानि विद्याकलाभ्यामेवाक्षिप्तानि, प्राणापानाभ्यां पुंस्तत्त्वमुक्तम् विद्याकलान्तःप्रविष्टेन किंचिदंशेन प्रधानमाक्षिप्तं विषयैः तन्मात्रभूतानि इति। इत्थमेष भगवान् प्रसरद्बिन्दुनादः, तत एव च ज्ञानक्रियामयत्वात् विश्वस्य, गृहीतविश्ववैचित्र्योऽपि परमेश्वरः शुद्धामृतमयात्मा परमानन्दरससार एव; अत एव अनन्तो—देशकालाकारैरपरिच्छिन्नः प्रकाशो यस्य, तेषामपि प्रकाशात्मकत्वात् , अन्यथा

पं १७ प्रकाशैकात्मकत्वात् इति पाठः ।

तु असत्त्वात्; एवं च इत्थं नरपर्यन्तेनापि रूपेण प्रसरन् परिपूर्ण एव शंकरक्षीरसिन्धुः यः स्थितः तस्मै नमः। क्षीरसमुद्रोऽपि उल्लसद्विन्दुः कल्लोलनादयुक्तः शुद्धः—सुसितः, अमृतमयः प्रकाशमाननागराजश्च भवति, इति श्लेषोपमा। स्तोत्रकारस्य पितामहः परमेश्वराख्यः, अपराजितः पिता, श्रीदयाख्या माता, शंकराभिधानो ज्येष्ठो भ्राता अभवत्, ततः तेषामपि परमेश्वराभेदभाजाम् इयं स्तुतिः, इति आख्यायिकाविदः ॥ ३ ॥

एवं विश्वात्मिकासु नर-शक्ति-शिवभूमिषु अद्वयैकपरमार्थं परमेश्वरमभेदेन विमृश्य, ईदृशीमेव सर्वदशासु स्वात्मप्रतिपत्तिं प्रथयति आ स्तोत्रपरिसमाप्ति विचित्राभिः सूक्तिभिः

द्विष्मस्त्वां त्वां स्तुमस्तुभ्यं
मन्त्रयामोऽम्बिकापते।
आतवाल्लभ्यतः साधु
विश्वङ्नो धृतवानसि ॥ ४ ॥

हे अम्बिकापते! विश्वस्य पितः, पितृत्वादेव असि—त्वं, नः—अस्मान्, विश्वक्—समन्तात् सर्वदशासु, साधु—सम्यक्, परादृयदृशा धृतवान्—अनुगृहीतवान्; कथम्? अतिवाल्लभ्यतः—यतः त्वम् अस्माकमतिशयेन वल्लभः, नित्यमेव त्वदेकपरा वयं, तत एव तवापि वयम् अतिवल्लभाः। यथोक्तं गीतासु

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।'

इति। यतश्च इत्थं हृदयैकध्यमस्माकम् अतोऽतिवाल्लभ्यादेव वयं व्यवहारपदे लोकमध्यगता लोकस्थितिरक्षणार्थं यत् किंचित् रहस्याचारादि गजनिमीलनिकया द्विष्मः तत् त्वामेव द्विष्मः, नहि अस्माकम् अत्वन्मयं किंचिदपि भाति, इति द्वेष्यद्वेष्ट्रादिभूमावपि त्वन्मया एव स्मः, न तु अस्माकं द्वेषादिदोषकालुष्यं जातुचित्। यदुक्त्यात

'दोषोऽपि देव को दोषस्त्वामाप्तुं यः समास्थितः।'

इति। यदपि लोकमध्यगताः तथैव वैदिकमि-
ष्टापूर्तादि स्तुमः तदपि न त्वदतिरिक्तम् इति
त्वामेव स्तुमः। यदपि यज्ञादौ इन्द्रादिदेवाम-
न्त्रणं कुर्मः तदपि तुभ्यं—त्वदर्थमेव मन्त्रयामः—
शिवमयात्मदेवतायै विश्वं जुहुमः। यच्छ्रुतिः

'यज्ञेन यज्ञमयजन्त देवा ........।'

इति। अत एवात्र व्यतिरिक्तस्य फलस्याभावात्
न कर्त्रभिप्रायक्रियाफलविवक्षा इति आत्मनेपदं
न कृतम्। किं च लोकोत्तरभवद्भक्तिशालिम-
ध्यगता अपि वयं यत् वैदिकाचारादि द्विष्मः,
यच्च रहस्याचारादि स्तुमः, तदपि त्वन्मयमेव
मन्यामहे। एवं च लोकलोकोत्तरयोः दशयोः वयं
यत् द्विष्मः तत् त्वामेव मन्यमाना वस्तुतस्तु
त्वां स्तुमः, त्वदद्वयमयद्वयाभासपरामर्शनमेव
हि भवत्स्तुतिः, अतश्च इत्थं तत्तद्द्वेषस्तुत्या-
व्यवस्थासु वस्तुतः त्वां स्तुवन्तो वयं तुभ्यं मन्त्र-

पं० ५ देवतायै जुहुमः इति पाठः।

यामः, त्वां मन्त्रदेवतां विश्वाभेदविमर्शात्मक-महामन्त्रेण मन्त्रयामः । इत्थम् अतिवाल्लभ्यात् अस्मान् असि—त्वं साधु—सम्यक् च अनुगृ-हीतवान्,त्वदनुग्रहादेव ईदृशी अस्माकं महा-विभूतिराविर्भूता इत्यर्थः ॥ ४ ॥

ततश्च

संहृतस्पर्शयोगाय
संपूर्णामृतसूतये ।
वियन्मायास्वरूपाय
विभवे शंभवे नमः ॥ ५ ॥

शं भवति अस्मात् इति शंभुः तस्मै, विभवे—व्यापकाय चिदात्मने नमः । कीदृशाय ? संहृतो—नाशितः स्पर्शैः—विषयैः योगः—अन्तर्नाना-वासनाधिष्ठानसंबन्धो येन; तत एव च वियत्—विनश्यत् अख्यात्यात्मनो मायायाः स्वरूपं यतः तस्मै; अतश्च संपूर्ण—पराद्वयप्रथात्म यत् अमृतं तस्य सूतये—अभिव्यक्तिहेतवे । एवं च पाशघ्न-

पणपूर्णस्वरूपदानेन भगवान् स्वात्मैव महेश्वरः अनुग्राह्यान् अनुगृह्णानः स्थितः, इति आन्तरवासनाबीजप्लोषयुक्त्यैव अख्यातिप्रशमनपुरःसरं परसत्तामाविशेत् भक्तिभाक्, इति भङ्ग्या उपदिष्टं भवति। उक्तं च

'उद्धरेदात्मनात्मानम् ............।'

इति। वियत्—आकाशम् अस्पर्शं पूर्णचन्द्रास्पदं मायावत् तुच्छस्वरूपं विभु च भवति, इति अनुरणनशक्त्या श्लेषध्वनिः, एवमुत्तरत्रापि॥५॥

किं च

भिन्नेष्वपि न भिन्नं य-
च्छिन्नेष्वच्छिन्नमेव च।
नमामः सर्वसामान्यं
रूपं तत्पारमेश्वरम्॥ ६॥

तत् पारमेश्वरं रूपं नमामः—एतत्स्तोत्रपरामर्शनद्वारेण अनुग्राह्यजन्तुचक्राभिन्ना वयं समाविशामः। इत्थमेव पूर्वत्रोत्तरत्र च बहुवचनं

योज्यम्। किं तत्?—इत्याह भिन्नेषु—विभागेन स्फुरत्स्वपि तत्तत्तत्त्व-तदधिष्ठेयप्रमातृ-तदाश्रयभुवनभावादिषु वस्तुषु यत् न भिन्नम्—एकरूपम्, तथा तेष्वेव छिन्नेषु—प्रलयाद्यवस्थासु विनष्टेष्वपि अविनष्टम्, अतश्च सर्वसामान्यम्—पूर्णाहन्तात्मकमहाचैतन्यरूपं सर्वसामान्यपदेन वैशेषिकाभ्युपेतपरापरसामान्यव्यतिरेकोऽस्य दर्शितः॥ ६॥

तदित्थम्

प्रणवोर्ध्वार्धमात्रातोऽ-
प्यणवे महते पुनः।
ब्रह्माण्डादपि नैर्गुण्य-
गुणाय स्थाणवे नमः॥ ७॥

स्थाणवे—सततावस्थितरूपाय भगवते नमः, कीदृशाय? प्रणवस्य या ऊर्ध्वार्धमात्रा तदुपलक्षितोऽतिसुसूक्ष्मः समनारूपो मात्रा—अंशः

ततोऽपि यः अणुः— अनुपलभ्यमूर्तित्वात् उपलब्ध्येकरूपः इत्यर्थः तस्मै । तथा शक्तितत्त्वावस्थितब्रह्मबिलाधिष्ठातृब्रह्मोपलक्षितं यत् अण्डं शक्त्यण्डपर्यन्तं जगत् ततोऽपि परिच्छेद्यमूर्तेः महते — तद्व्यापकाय अपरिच्छेद्याय इत्यर्थः । तथा नैर्गुण्यं—सत्त्वादिगुणाभाव एव गुणः—चित्प्रकाशात्मा धर्मो यस्य । इत्थं च प्रणवोच्चारणक्रमेण समनान्तभूमिकातिक्रमेण उन्मनापरतत्त्वैकात्मकं व्याप्तसमनान्ताशेषविश्वं चिदेकघनमेव सततावस्थासु भगवत्स्वरूपं समाविशामः, इति पिण्डार्थः ॥ ७ ॥

ततश्च

ब्रह्माण्डगर्भिणीं व्योम-
व्यापिनः सर्वतोगतेः ।
परमेश्वरहंसस्य
शक्तिं हंसीमिव स्तुमः ॥ ८ ॥

'शिवो धर्मेण हंसस्तु ………… ।'

इति स्वच्छन्दनिरूपितनीत्या विश्वसृष्टिसंहारात्मकहानसमादानधर्मा परमेश्वर एव हंसः, तस्य च तादृशीमेव शक्तिम्—उन्मनाख्यां हंसीरूपां स्तुमः— तद्विमर्शावेशपुरःसरं शक्तिमत्स्वरूपं समाविशामः । कीदृशीं? व्याख्यातरूपं ब्रह्माण्डं गर्भे — अन्तरभेदेन स्थितं यस्याः । कीदृशस्य परमेश्वरहंसस्य ? व्योमव्यापिनः—महामन्त्रराजसतत्त्वस्य, व्योम च शून्यातिशून्यपदं व्याप्नुवतः, तथा सर्वतः— सर्वस्मात् गतिः—प्राप्तिः यस्य, सर्वत्र च गतिः— प्रसरद्रूपता प्रकाशश्च यस्य । हंसस्य च व्योमप्रसरणेन सर्वत्र गच्छतः अण्डगर्भिणी हंसी नित्यमनुचरी भवति इति उपमा ॥ ८ ॥

अथातिदुर्घटकारिस्वातन्त्र्यात्मकं माहेश्वरं रूपं स्तोतुमाह

निरुपादानसंभार-
मभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै
कलाश्लाघ्याय शूलिने ॥ ९ ॥

स्वातन्त्र्यशक्तिभित्त्युट्टङ्कितेच्छाज्ञानक्रिया-रात्रयोन्द्भासिशूलभृते नमः, गच्छति तत्तदव-स्थावैचित्र्यम् इति जगत् – अनाश्रितशिवादि-क्षित्यन्तं, चित्रं – नानारूपम्; अथ च तदेव चित्रं चित्रमिव तत्तदनन्तरुद्रक्षेत्रज्ञाद्याभासम-यमपि भित्तिमात्रतत्त्वमेव, तथा भूतमपिच तद-तिरिक्तमिव इति आश्चर्यकारि, 'चित्रम्' इति व्यस्तं समस्तं च, अभित्तौ– निषेधावभासरू-पायां महाशून्यभित्तौ, तन्वते – उट्टङ्कितवते, 'अ-मा-नो-नाः प्रतिषेधे' इति स्थित्या अकारः प्रतिषेधवाची, अरूपा शून्यात्मा भित्तिः अभि-त्तिः; कथं तन्वते? निरुपादानसंभारम्, उपा-दानं– मायाप्रकृत्यादि, संभारः–कर्मादिः सह-कारिग्रामः, तेन निष्क्रान्तं कृत्वा उपादानस-हकार्यादेरपि तदाभास्यत्वेन जगन्मध्य एव अनुप्रवेशात् अन्यथा शशविषाणतुल्यत्वात् तदित्थं परमेश्वरः कलया– स्वशक्तिवैदग्ध्येनैव श्लाघ्यः। आश्चर्यं च एतत्– अनुपादानादिप्रप-

श्वम् अभित्तिकं चित्रम् इति, न चैतत् असं-भाव्यं, संकल्पस्वप्नयोरिव निर्माणादौ संविद एव भगवत्याः तत्तदाभासोल्लासकत्वदर्शनात् ॥ ९ ॥

एवं यथा भगवत एव अनर्गलात् स्वातन्त्र्यात् जगदुदयः, तथा अत एव संसारानिवृत्तिः उचिता इति संभावयन् मायातिरोभावकं ज्ञानं लब्धुं परमेश्वरमेव प्रार्थयते

मायाजलोदरात्सम्य-
गुद्धृत्य विमलीकृतम्।
शिवज्ञानं स्वतो दुग्धं
देह्येहि हरहंस नः ॥ १० ॥

हे व्याख्यातसतत्त्व हरहंस। एहि—संमुखीभव,—शरीरादिभूमिकातिरस्कारेण उन्मज्ज, अ-तश्च व्युत्थानदशायामपि 'शिव एव इदं विश्वम्' इति ईदृक् श्रेयोरूपं ज्ञानं, नः—अस्मभ्यं देहि—

मनसि प्ररोहय। यच्छ्रुतिः

'तन्मे मनः शिवसंकल्पमस्तु'।

इति। कीदृशम्?,—अख्यातिरूपाया मायायाः संबन्धि यत् कलाकलितत्वादिवशेन जडं— भेद-प्रतीतिसारम्, उदरं— मध्यं, ततः सम्यक्—मिताहंभावगालनयुक्त्या उन्मील्य, विमलीकृतं— विगलिताख्यातिसंस्काररूपां शुद्धिमापादितम्, अत एव स्वतो दुग्धं— त्वयैव कलाश्लाघ्येन आकृष्य आनीतम्। हंसः क्षीरनीराभ्यां क्षीरमाहर्तुं विदग्ध इति अनुरणनार्थः॥ १०॥

यतश्च त्वमीदृक् शिवज्ञानं नः प्रयच्छसि अत एव

षट्प्रमाणीपरिच्छेद-
भेदयोगेऽप्यभेदिने।
परमार्थैकभावाय
बलिं यामो भवाय ते॥ ११॥

---

पं० १४ क० पु० भेदयोगेऽप्ययोगिने इति पाठः।

भवति–सर्वस्य सत्यप्रकाशात्मना रूपेण विद्यते इति भवः, तत एव परमार्थेन एकस्वरूपः, तस्मै ते बलिं यामः–उन्मीलितशिवज्ञानाय तुभ्यमेव भैरवाग्नये शरीरप्राणपुर्यष्टकादि जुहुमः। कीदृशाय? षण्णां–प्रत्यक्षानुमानोपमानागमार्थापत्त्यभावाख्यप्रमाणानां समाहारः षट्प्रमाणी मीमांसकोक्ता, तया कृतो यः स्वस्य स्वस्य विषयस्य परिच्छेदः, स एव भेदः–प्रत्यक्षाप्रत्यक्षसादृश्य-यागफल-साध्यसाधनाभावाख्यप्रमेयव्यवस्थारूपः,प्रमातृप्रमाणप्रमेयापेक्षारूपश्च, तद्योगेऽपि न भिद्यते तच्छीलः तस्मै। एतदुक्तं भवति–यत्किंचित् प्रमाणैः विभेदेन व्यवस्थाप्यते तत् व्यवस्थाप्यमानत्वादेव संविन्निष्ठां व्यवस्थाम् आसादयत् संविन्मयमेव, इति भेदव्यवस्थापि अभिन्नमहाप्रकाशात्मकशिवमय्येव, प्रमाणपरिच्छेदयोगश्च भगवत एव संभाव्यः ततोऽतिरिक्तस्याभावात्, तथा-

पं० २ क० पु० परमार्थैकस्वरूप इति पाठः।

संभावनाथामपि च उक्तदृशा अभेदित्वमेव ॥ ११ ॥

इत्थं बलिनिवेदनलब्धसमावेशो व्युत्थानेऽपि तद्रूपतामाशंसितुमाह

अपि पश्येम गम्भीरां
परेण ज्योतिषाभितः ।
उन्मृष्टतमसं रम्या-
मन्तर्भव भवद्गुहाम् ॥ १२ ॥

हे भव! भवद्गुहां– त्वन्मायाशक्तिं गम्भीरां– दुरन्तां, परेण ज्योतिषा– त्वदीयेन परमाद्वयप्रकाशेन, अभितः– अन्तर्बहिश्च उन्मृष्टतमसं– प्रशमिताख्यातितिमिराम् , अत एव रम्यां – पारमार्थिकेन स्वातन्त्र्यशक्त्यात्मना रूपेण स्फुरन्तीम्, अन्तरिति पूर्णाहन्तात्मनि प्रमात्रैकात्म्ये, पश्येम– समाविशेम किम्?॥१२॥

एवं तदाशंसावशोन्मिषद्भक्त्युद्रेक आह

---

पं० १२ क० पु० प्रमात्रैकात्म्येन अपि नाम इति पाठः ।

नमस्तेभ्योऽपि ये सोम-
कलाकलितशेखरम्।
नाथं स्वप्नेऽपि पश्यन्ति
परमानन्ददायिनम् ॥ १३ ॥

आस्तां तावत् अद्वयात्मा कतिपयजनहृद्याश्वासप्रदः पारमेश्वरः स्वभावः। आकृतिमन्तमपि इन्दुशेखरं ये दर्शनावसर एव परमानन्दप्रदं स्वप्नेऽपि पश्यन्ति, तेभ्योऽपि भवद्दर्शनपवित्रितेभ्यो नमः ॥ १३ ॥

यतश्च एतेऽपि अस्माकं भवद्भक्त्युद्रेकेण नमस्कार्याः, ततः

भगवन्भव भावत्कं
भावं भावयितुं रुचिः।
पुनर्भवभयोच्छेद-
दक्षा कस्मै न रोचते ॥ १४ ॥

भावत्कं भावं — चिदानन्दघनं त्वत्स्वरूपं

भावयितुं—स्वत्वेन प्रत्यवमष्टुं, रुचिः—अभिलाषः श्रद्धा, कस्मै महाधिये न रोचते, सर्वस्यैव प्रतिभासते इत्यर्थः। कीदृशी? पुनर्भवभयोच्छेदे—जन्मान्तरत्रासोन्मूलने दक्षा—शक्ता ॥१४॥

अतश्च

यावज्जीवं जगन्नाथ
कर्तव्यमिदमस्तु नः।
त्वत्प्रसादात्त्वदेकाग्र-
मनस्कत्वेन या स्थितिः ॥१५॥

त्वदनुग्रहादेव एकमपि क्षणं त्वदभेदभावनाशून्यं मा भूत् इत्यर्थः। त्वदेकाग्रेति त्वमेव एकः अग्रे नित्यं स्वात्मरूपतया विमृश्यो यस्य ॥ १५ ॥

पुनरपि भक्तिप्रकर्षात् सर्वशास्त्रवाक्यैकवाक्यतां विमृशन् भगवत्स्वरूपं स्तौति

शाखासहस्रविस्तीर्ण-
वेदागममयात्मने ।
नमोऽनन्तफलोत्पाद-
कल्पवृक्षाय शंभवे ॥ १६ ॥

तत्तदंशाभिनिविष्टमितहृदयानुसारेण विभिन्नशाखाशतैः विततो यः—विन्दन्ति अनेन परं तत्त्वम् इति व्युत्पत्त्या वेदरूपः आगमः—परमेश्वरप्रणीतं वाक्यैकवाक्यं, तथा एकपरवस्तुतत्त्वविश्रान्तिसारं सर्वमेव शास्त्रं तन्मय आत्मा यस्य, परमेश्वर एव हि शब्दराशिशरीरः तत्प्रपञ्चमयाशेषशास्त्रात्मना स्फुरति, अत एव अनन्तम्—अपरिच्छिन्नं स्वरूपप्रथामयं यत् फलं, तदुत्पादे—तदाभिव्यक्तौ, कल्पवृक्षतुल्याय अविलम्बितमेव फलिनाय, मितहृदयविकल्पितविभिन्नशाखानुसारेण तु अनन्तस्य—नानारूपस्य फलस्य उत्पादकाय, शाखाभेदेऽपि तु 'सर्वशाखाप्रत्ययम् एकं कर्म' इति स्थित्या वाक्यैकवा-

क्यतापर्यालोचनया परफलविश्रान्तत्वमेव नानाशास्त्रात्मना एकस्यैव महाशास्त्रस्य। यदुक्तं सारस्वते स्तोत्रे

'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥'

इति ॥ १६ ॥

यत एवम्, अतः

वाङ्मनःकायकर्माणि
विनियोज्य त्वयि प्रभो।
त्वन्मयीभूय निर्द्वन्द्वाः
कच्चित्स्यामापि कर्हिचित्॥१७॥

यत्किञ्चित् वदन्तः कल्पयन्तः कुर्वाणा वा वयं त्वन्मयमेव सर्वं भावयन्तः, अत एव त्वन्मयीभावात् निर्द्वन्द्वाः—गलितभेदाः, तथा सुखदुः-

---

पं० ११ ग० पु० विनिवेश्य इति पाठः।

स्वादिसर्वद्वन्द्वानभिभूता अपि—नाम; कश्चित् कदाचित् भवेम ॥ १७ ॥

फलितैव इयमस्माकमाशंसा,—यत एवंविधो भगवान्,—इत्याशयेन असामान्यतत्प्रकर्षपरामर्शात्मिकां स्तुतिमाह

जगतां सर्गसंहार-
तत्तद्धितनियुक्तिषु।
अनन्यापेक्षसामर्थ्य-
शालिने शूलिने नमः ॥१८॥

निर्णीतपरशक्तिस्फारतत्त्वाय शूलिने, तत एव सदाशिवादिसकलान्तानां सर्वजगतां विविधजन्मप्रलययोः तत्तदभीष्टप्राप्त्यात्मिकासु च हितनियुक्तिषु भोगापवर्गसंपादनेषु, निरपेक्षनिजस्वातन्त्र्यविजृम्भितात्मने नमः—इति प्राग्वत्, एवमुत्तरत्रापि ॥ १८ ॥

कृतं वाभ्याधिकेन

व्यतीतगुणयोगस्य
मुख्यध्येयस्य धूर्जटेः।
नामापि ध्यायतां ध्यानैः
किमन्यालम्बनैः फलम् ॥१९॥

धूर्जटेः—महादेवस्य, अर्थानुगमशून्यं वस्तुतः तत्त्वार्थनिष्ठं धूर्जट्यादिनामापि भूयो भूयः चिन्तितं किं किं न सूते, अतः तदेव चिन्त्यताम्। यदुद्व्याति

'भवतस्त्वीश नामापि मोक्षपर्यन्तसिद्धिदम्।'

इति। तथा

'यन्नाम्नापि महात्मानः कीर्यन्ते पुलकाङ्कुरैः।'

इति। एवं यन्नाममात्रचिन्तनमेवाभिलषितं पुष्णाति, तदन्यालम्बनैः—तत्तदाकारविषयैः ध्यानान्तरैः किं प्रयोजनम्। उक्तं च श्रीविज्ञानभैरवे

'भिया सर्वं रवयति सर्वदो व्यापकोऽखिले।
इति भैरवशब्दस्य सन्ततोच्चारणाच्छिवः॥'

---

पं० ६ क० पु० तत्त्वार्थशून्यम् इति पाठः।

इति। शब्दस्येति शब्दमात्रे भरः, वस्तुतो हि भैरवशब्दः प्रोक्तपूर्णार्थवृत्तिः अतो यदि अर्थभावनां विनापि यः सन्ततम् उच्चारयति स शिव एव भवति,—परमन्त्रवत् एवमादेर्भगवद्वाचकस्य वाच्यैकात्म्यात्। कीदृशस्य धूर्जटेः? व्यतीतगुणयोगस्य — निस्त्रैगुण्यमहाप्रकाशात्मतया आकृत्याद्युपाधिशून्यस्य, अत एव मुख्यध्येयस्य — ब्रह्मादिभिः सर्वकारणैः ध्येयैरपि उपास्यस्य ॥ २० ॥

पुनरपि भक्तिभरोद्रेकोल्लसितहृदय आह

नमो नमः शिवायेति
मन्त्रसामर्थ्यमाश्रिताः।
श्लाघ्यास्ते शाम्भवीं भूति-
मुपभोक्तुं य उद्यताः ॥ २० ॥

शिवाय—चिदानन्दैकघनश्रेयोरूपाय, नमो

---

पं० १३ ग० पु० भूमिमुपभोक्तुम् इति पाठः।

नमः—इति अविच्छेदेनैव पुनः पुनः शरीरप्राणपुर्यष्टकशून्यात्मकं तद्द्वारेण च विश्वं जुहुमः, इत्येवम् अर्थसतत्त्वे तन्मन्त्रमाहात्म्यं ये आस्थिताः—अनुप्रविष्टाः, ते शाम्भवीं विभूतिं महानन्दमयीम् उपभोक्तुं — स्वात्माभेदेन चमत्कर्तुम् उद्यताः श्लाघ्याः ॥ २० ॥

वयं च तादृशा इति स्वात्मन्येव अमानाह, अथवा निर्भरभक्तिभाजामस्माकम्

कः पन्था येन न प्राप्यः
का च वाङ्नोच्यसे यया ।
किं ध्यानं येन न ध्येयः
किं वा किं नासि यत्प्रभो ॥२२॥

किं वा अनेन 'नमो नमः शिवाय' इत्यादिमन्त्रपरामर्शेन, यतो यत् अमितत्वन्महाप्रकाशरूपं न भवति तत् किं, न किञ्चिदेव। तेन कः तादृशः पन्थाः—कायीयः क्रियाक्रमोऽस्ति,

येन त्वं न प्राप्यो भवसि। वागपि सर्वा त्वद्वि-षयैव। सर्वं मनःसंकल्पात्मकं ध्यानमपि त्वदा-लम्बनमेव। अतश्च अप्रयासं सर्वदैव त्वन्मया जाताः स्मः ॥ २१ ॥

अत एव सर्वदशासु

अर्चितोऽयमयं ध्यात
एष तोषित इत्ययम्।
रसः स्रोतःसहस्रेण
त्वयि मे भव वर्धताम् ॥ २२ ॥

शरीरमनोवाग्व्यापारैः सर्वैरेव मामकैः यतो भगवत्येव विश्रम्यते, तेन अयम् इति एष इति च सर्वदशासु प्रस्फुरन् चित्परमार्थो भगवान् यथाक्रमम् अर्चितो ध्यातः परितोषितश्च इत्ययं रसः— अभिनिवेशः, त्वद्विषये मम यः स्थितः स शतशाखः प्रवर्धताम् ॥ २२ ॥

अतश्च

नमो निःशेषधीपत्त्रि-
मालालयमयात्मने ।
नाथाय स्थाणवे तुभ्यं
नागयज्ञोपवीतिने ॥ २३ ॥

तुभ्यं स्थाणवे—अविनाश्यमानैकरूपाय, नमः । कीदृशाय?—नागो वासुकिः यज्ञोपवीतं यस्य तस्मै, इत्थम् आकृतिमत्त्वेऽपि

'चित्रं यच्चित्रदृष्टोऽसि मनोरथगतोऽपि वा ।
परमार्थफलं नाथ परिपूर्णं प्रयच्छसि ॥'

इति स्थित्या पूर्ण एव भगवान् इत्याह—निःशेषाणां—शिवादिकीटान्तानां, निःशेषाश्च या धियः संविदः, ता एव चाञ्चल्यात् पत्त्रिमालाः पक्षिपङ्क्तयः, तासां यो लयः—पूर्णाहन्तात्मनि विश्रान्तिः, तन्मय आत्मा यस्य तस्मै, स्थाणुश्च जरद्वृक्षकल्पः पक्षिवर्गालययुक्तो भवति ॥२३॥

एतन्नमस्कृतिसमुचितां प्रार्थनामाह

अज्ञानतिमिरस्यैक-
मौषधं संस्मृतिस्तव।
भव तत्तत्प्रदानेन
प्रसादः क्रियतां मयि ॥ २४ ॥

अज्ञानं—शिवैक्याख्यातिरेव, तिमिरं—परप्रतिभाचक्षुरावारकत्वेन द्वैतप्रदर्शको दोषः, तस्य चिद्घनस्वरूपविमर्शात्मा त्वत्स्मृतिरेव एकम् औषधं—प्रशमोपायः, तस्मात् तत्प्रदानेन—तदेकाग्रमयत्वापादनेन, प्रसादः क्रियताम्—अख्यातिकालुष्यप्रशमनेन नैर्मल्यम् आश्रीयताम् ॥ २४ ॥

पुनरपि भक्तिभराविष्ट एतत्प्रसादसंभावनोचितां स्तुतिमाह

नम ईशाय निःशेष-
पुरुषार्थप्रसाधकः।
प्रणन्तव्यः प्रणामोऽपि
यदीय इह धीमताम् ॥ २५ ॥

धीमतां—तत्त्वविदां, यदीयः—प्राग्व्याकृतसमावेशात्मा प्रणामोऽपि, निःशेषस्य भोगापवर्गात्मनः पुरुषार्थस्य संपादकत्वात् तथा अलङ्कारकत्वात् प्रणन्तव्यः—प्रह्वतया समाश्रयणीयः, भूयोभूयः तस्मै ईशाय—एवंविधालौकिकस्वातन्त्र्याय नमः ॥ २५ ॥

युक्तं च एतत्

मग्नैर्भीमे भवाम्भोधौ
  निलये दुःखयादसाम् ।
भक्तिचिन्तामणिं शार्वं
  ततः प्राप्य न किं जितम् ॥२६॥

दुरुत्तरक्लेशमये संसाराब्धौ, दुःखानि— आधिभौतिकाद्युपतापा एव यादांसि—मकरादयः, तेषाम् आस्पदे मग्नैः—निरवशेषं ब्रुडितैः, तत एव तन्मध्यादेव, शार्वं—शर्वस्य विश्वशरणवरणस्य सम्बन्धिनं भक्तिचिन्तामणिं तादि-

च्छयैव लब्ध्वा — अकस्मादेव प्राप्य, किं यत् क्लेशादि न जितं—न अभिभूतं। किं यच्च भोगापवर्गादि न जितं—न प्राप्तं, सर्वम् अभीष्टं झगिति लब्धमेव इत्यर्थः। तथा च नन्दिमहाकालादीनां तत्तदभीष्टावाप्तिः आगमेषु श्रूयते ॥२६॥

भक्तिरेव च भगवत्तत्त्वपरिज्ञाने हेतुः, न अन्यत् इत्याह

निरावरणनिर्द्वन्द्व-
निश्चलज्ञानसंपदाम्।
ज्ञेयोऽसि किल केऽप्येते
ये त्वां जानन्ति धूर्जटे ॥२७॥

किल इति आगमे—एवं किल आम्नायेषु उच्यते, आवरणात्—अख्यात्यात्मनो निष्क्रान्ता निर्द्वन्द्वा—परमाद्वैतरूपा, निश्चला च अकम्पा ज्ञानसम्पत् येषां तेषामेव, धूर्जटे। ज्ञेयो भवासि—स्वप्रकाशतया स्फुरसि, अतः केऽपि एते—लोको-

त्तरा एव एते महात्मानः, ये त्वां पश्यन्ति—स्वाभेदेन स्फुरन्तं प्रत्यभिजानन्ति ॥ २७ ॥

ततश्च

निर्गुणोऽपि गुणज्ञानां
ज्ञेय एको जयत्यजः ।
निष्कामोऽपि प्रकृत्या यः
कामनानां परं फलम् ॥२८॥

प्रोक्तज्ञानात्मकगुणावभासिनाम्, एकः—अद्वितीयः, अजः—अनादिः, निर्गुणोऽपि—सत्त्वादिगुणास्पृष्टमूर्तिरपि, ज्ञेयो—ज्ञातुं शक्यः स्वाभेदेन स्फुरति। तथा परिपूर्णानन्दनिर्भरत्वात् कामेभ्यः— कामनाभ्यो निष्क्रान्तोऽपि, प्रकृत्या—वस्तुसौन्दर्येण, सर्वासां कामनानां, परं—पूर्णं फलं। सर्वा हि कामनाः तत्तद्भोगात्मकफलयोगिन्योऽपि भोक्तृचमत्कारप्रमुखं पार्यन्तिकपरमानन्दाब्धौ पर्यवस्यन्ति। तदुक्तमस्म-

स्प्रभुपादैः

'फलं क्रियाणामथ वा विधीनां
पर्यन्ततस्त्वन्मयतैव देव ।
फलेप्सवो ये पुनरत्र तेषां
मूढा स्थितिः स्यादनवस्थयैव ॥'

इति । अपिशब्दौ विरोधं व्यङ्क्तः ॥ २८ ॥

अयमपि भगवत एव असामान्यः प्रकर्ष इत्याह

**श्रीरत्नामृतलाभाय**
**क्लिष्टं यत्र न कैः सुरैः ।**
**तत्क्षीरोददमैश्वर्यं**
**तवैव सहजं विभो ॥ २९ ॥**

यत्र—क्षीरोदे, लक्ष्म्याः कौस्तुभपारिजातादीनां रत्नानाम् अमृतस्य च लाभाय, उपेन्द्रादिभिः कैः सुरैः न क्लिष्टं—सर्वैरेव कदर्थना अनुभूता । तस्य तादृशस्य आश्चर्यनिधेः क्षीरोदस्य प्रदायकमैश्वर्यं, हे विभो, तवैव सहजम्, अन्यस्य तु आ-

राधनासहस्रैरपि न उपार्जनीयं भवति, भवतैव उपमन्युमुनये क्षीरोदस्य वितरणात् ॥ २९ ॥

अतश्च

नमो भक्त्या नृणां मुक्त्यै
भवते भव तेऽवते।
स्मृत्या नुत्या च ददते
शंभवे शं भवेऽभवे ॥ ३० ॥

हे भव! ते—तुभ्यं, शंभवे नमः। कीदृशाय? भक्त्या उपलक्षितानां नृणां मुक्त्यै भवते—निजप्रथैकात्म्यमुक्तिरूपतया स्फुरते। तथा स्मृत्या उपलक्षितानाम् अवते—सर्वभयेभ्यो रक्षां कुर्वते। तथा नुत्या—स्तुत्या हेतुना उपमन्युमरुत्तप्रभृतिभ्य इव भवे संसारे शं भोगसंपद्रूपं श्रेयः, अभवे—अभवनिमित्तं ददते, मोक्षपर्यवसितं भोगं प्रयच्छते इत्यर्थः ॥ ३० ॥

न केवलं मुमुक्षूणाम् आर्तानां बुभुक्षूणां

च त्वया अभीष्टं संपाद्यते यावत् जीवन्मुक्ति-
कामानामपि इत्याह

सर्वज्ञः सर्वकृत्सर्व-
मसीति ज्ञानशालिनाम्।
वेद्यं किं कर्म वा नाथ
नानन्त्याय त्वयार्प्यते ॥ ३१ ॥

सर्वज्ञः सर्वकर्तृस्वभावः त्वमेव चिदात्मा
सर्वमसि,—इति ईदृशेन ज्ञानेन ये शालन्ते तेषां
यत् वेद्यं—ज्ञेयं, कर्म—कार्यं क्रियारूपं वा, किं
तादृगस्ति? यत् त्वया आनन्त्याय न अर्प्यते,
सर्वमेव एषां वैश्वात्म्येन दर्श्यते इत्यर्थः।
एवं च सर्वत्र सर्वात्मकमाहेश्वर्यप्रथा जीव-
न्मुक्तिः॥ ३१॥

अलं वा पारमेश्वरप्रसादानाम् इयत्तया, यतः

इच्छाया एव यस्येयत्
　फलं लोकत्रयात्मकम् ।
तस्य ते नाथ कार्याणां
　को वेत्ति कियती गतिः ॥३२॥

इच्छामात्रेण यो भवाभवातिभवात्मकं लोकत्रितयं विधत्ते, तस्य कार्याणां—प्रयत्ननिर्वर्त्यानां वस्तूनां, कियती—किं-परिच्छेदा, गतिः—प्रसृतिः, इति एतत् को वेत्ति, न कश्चित्। अतर्क्यमेव एतत्,—इत्यातिशयोक्तिपरमेतत्, न भगवतो यत्ननिर्वर्त्यत्वं किञ्चित्। 'पश्य मृगो धावति' इतिवत् वाक्यार्थस्य अत्र कर्मता ॥ ३२ ॥

न केवलं त्वदीयः कार्यस्फारो ज्ञातुमशक्यः, यावत् तव ऐश्वर्यात्मकज्ञानमहिमापि इत्याह

ब्रह्मादयोऽपि तद्यस्य
　कर्मसोपानमालया ।
उपर्युपरि धावन्ति
　लब्धुं धाम नमामि तम्॥३३॥

---

पं० १ क० पु० यस्येदं फलम् इति पाठः ।

ब्रह्मविष्णुरुद्रादयोऽपि यस्य तत् ,अचिन्त्यं धाम – पदं लब्धुं, कर्मसोपानमालया – तत्तदनुध्यानाद्यनुष्ठानपरम्पराभिः, उपर्युपरि – इति उत्तरोत्तरप्रयत्नाधिक्येन अधिकप्रकर्षवाञ्छया धावन्ति, न कामपि विश्रान्तिं भजन्ते। नहि सर्वसामान्ये पारमेश्वरे पदे कश्चित् प्रकर्षापकर्षयोगः – इति उत्तरोत्तरप्रकर्षाभिलाषुकैः कथं तत् प्राप्यते – इति ज्ञानमाहात्म्यमपि माहेश्वरमपरिच्छेद्यमेव ॥ ३३ ॥

किं च तच्छक्तेरेव इमा भंग्यो, – यदेते ब्रह्मादय इत्याह

अयं ब्रह्मा महेन्द्रोऽयं
सूर्याचन्द्रमसाविमौ ।
इति शक्तिलता यस्य
पुष्पिता पात्वसौ भवः ॥३४॥

अयं ब्रह्मा,–इति विष्णुरुद्रेशसदाशिवाशिवान्

उपलक्षयति, तेन तत्तत्सृष्टिस्थित्यादिमितकार्यकारिणो ये ब्रह्मादयः, यश्च महेन्द्रः सुराधिपत्ये स्थितः, यौ च जगतः प्रकाशाप्यायनादिव्यापारकारित्वेन स्थितौ सूर्याचन्द्रमसौ, इति–एवंप्रकारम् अन्यदपि यत्किंचित् महाविभूतियुक्तं, तत्सर्वं यस्य शक्तिः–सामर्थ्यरूपा लता इव, पुष्पिता–संजातपुष्पमात्रतया स्फुरिता न तु फलिता, सर्वस्य पुष्पकल्पस्य परमेश्वराभेदप्राप्तिरेव लोकोत्तरचमत्कारमयी फलम्। यथोक्तं श्रीपूर्वशास्त्रे समावेशचर्चायाम्

'संवित्तिफलभेदोऽत्र न प्रकल्प्यो मनीषिभिः।'

इति। यस्य च एवं शक्तिलता पुष्पिता, स पूर्वव्याख्यातसतत्त्वो भवः पातु,–अस्मात् मितब्रह्माद्युपासासंकल्पसंपर्कात् रक्षतु। स्तुतं च मया

'सर्वज्ञाः सर्वकर्तारो ब्रह्माद्या भुवनेश्वराः।
यत्रैते बुद्बुदायन्ते बोधाब्धिं तं शिवं स्तुमः॥'

इति ॥ ३४ ॥

---

पं० १० क० पु० समावेशचर्यायाम् इति पाठः।

तदित्थं महाव्यापकस्य

भ्रमो न लभ्यते यस्य
भ्रान्तान्तःकरणैरपि ।
दूरगैरपि यस्यान्तो
दुर्गमस्तं स्तुमो मृडम् ॥३५॥

तं मृडं – परमानन्दमयं महेश्वरं, स्तुमः – समाविशामः। कीदृशं ?–यस्य भ्रान्तान्तः करणैः–चिरकालं परममहत्त्वभावनायोगप्रकर्षेण अन्विष्यद्भिरपि, भ्रमो – वैपुल्याभोगो न लभ्यते। तथा दूरगैरपि – अतिविप्रकृष्टम् अध्वान भावनाक्रमेण गच्छद्भिरपि यस्य अन्तः – दैर्घ्यपरिसमाप्तिः, कालकृता पूर्वापरकोटिश्च न लभ्यते – निराकृतित्वेन देशकालायोगात्, अत एव आकृतिमत्त्वेन भगवदन्वेषणपरा भ्रान्तान्तःकरणा उक्ताः। किं च प्रलयावसरे जलमध्ये स्वेच्छावभासितज्वालारूपाकृतिमतोऽपि यस्य ब्रह्मविष्णुप्रभृतिभिः तात्त्विकतदीयमाहात्म्यापर्यालो-

चनया भ्रान्तचित्तैः अन्विष्यद्भिः परिच्छेदो न लब्धः, — इति पौराणिकोऽप्यर्थः अनेन स्पृष्टः । अपि च यस्य संबन्धी भ्रमोऽपि महामायात्मा न लभ्यते — न परिच्छिद्यते । सर्व एव हि ब्रह्मविष्णुरुद्राद्या मायाविमोहिताः, तत एव भ्रान्तान्तःकरणैरित्युक्तं । यत्र एतदीयमायाशक्तिरपि न लभ्यते — न परिच्छिद्यते, तत्र स कथं परिच्छेद्यः स्यात् इति । दूरगैरपि—षडध्वधाराधिरूढैरपि अनाश्रितादिभिः, यस्य अन्तः — परिच्छेदो दुर्गमो न लभ्यत एव ॥ ३५ ॥

यस्तु भक्तिशाली स सर्वावस्थासु भगवद्भेदावष्टम्भमय एव इत्याशयेन आह

नमः स्तुतौ स्मृतौ ध्याने
दर्शने स्पर्शने तथा ।
प्राप्तौ चानन्दवृन्दाय
दयिताय कपर्दिने ॥ ३६ ॥

कपर्दिने — महादेवाय, दयिताय — परमवल्लभा-

य नमः, कीदृशाय? स्तुतौ — नामग्रहणे, स्मृतौ — तदर्थभावने, ध्याने — तदेकताननतात्मनि चिन्तने, दर्शने — तदनन्तरभाविनि साक्षात्कारे, स्पर्शने — तद्विश्रान्तौ, प्राप्तौ — तदैकात्म्यलाभे; यद्वा सर्वस्य भगवन्मयत्वात् सर्वदा सर्वेन्द्रियवृत्तिषु स्वरूपविश्रान्त्यात्मिकायां प्राप्तौ च आनन्दवृन्दाय—पराह्लादस्फाररूपाय। लौकिकोऽपि दयितः स्तुत्यादिषु प्राप्तिपर्यन्तेषु क्रमेण अधिकाधिकं सुखयति, परमेश्वरस्तु सर्वत्र अन्यूनाधिकपरिपूर्णानन्दमय एव। — इति अर्थशक्तिमूलो व्यतिरेकध्वनिः ॥ ३६ ॥

यतश्च सर्वदशासु आनन्दवृन्दात्मकमहेश्वरमयतैव स्फुरति, ततः

किं स्मयेनेति मत्वापि
मनसा परमेश्वर।
स्मयेन त्वन्मयोऽस्मीति
मामि नात्मनि किं मुदा ॥ ३७ ॥

पं० ३ क० पु० तदन्तरभाविनि इति पाठः।

तत्सृष्ट्यादिकारिब्रह्मादिपदेऽपि विनाशिनि, यः स्मयो – गर्वः, तेन किं 'न किंचित्' इति मनसा मत्वापि – निश्चित्यापि, हे परमेश्वर ,–विश्वातिशायिन्, त्वत्स्वरूपप्रत्यभिज्ञावशोन्मिषितेन 'त्वन्मयोऽस्मि' इति स्मयेन – महाभिमानात्मना, या मुत् – हर्षः, तया, किम् अहमस्मिन्नेव आत्मानि मामि न – अपि तु मामि,– परिपूर्णतया स्फुरामि एव इत्यर्थः। यद्वा सर्वाभिमानान् जहदपि अहं 'त्वन्मयोऽस्मि' इति स्मयेन जनितया मुदा कथमिव ईदृक् कृतो, यत् आत्मन्येव न मामि – न वर्ते ॥ ३७ ॥

एवंविधाभिमानेनापि त्वय्येव विश्राम्यामि इत्याह

चिन्तयित्वापि कर्तव्य-
कोटीश्चित्तस्य चापलात्।
विश्राम्यन्भव भावत्क-
चित्तानन्दे रमे भृशम्॥ ३८॥

स्वाभाविकात् चित्तचाञ्चल्यात्

'इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
यद्द्ये दास्यामि मोदिष्ये ······················ ॥'

इत्यादिका निर्विरामप्रवृत्ताः कर्तव्यपरम्पराः चिन्तयित्वा–संकल्प्यापि,

'अत एव यथाभीष्टसमुल्लेखावभासनात् ।
ज्ञानक्रिये स्फुटे एव सिद्धे सर्वस्य जीवतः ॥'

इति प्रत्यभिज्ञानिर्णीतवस्तुतत्त्वपरामर्शदिशा, हे भव, भावत्काचित्तानन्दे – त्वच्चैतन्यमेव परिपूर्ण आनन्दः, तत्र विश्राम्यन्, अहं भृशं रमे, बाह्यपर्यन्तमपि विश्वं त्वदानन्दरसप्लुतमेव अनुभवन् स्थितः। यथोक्तं प्रत्यभिज्ञायाम्

'सर्वो ममायं विभव इत्येवं परिजानतः ।
विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥'

इति। प्रथमश्लोके विकल्पात्मकचित्तप्रशमनक्रमेणैवं परतत्त्वप्रवेशोपायो य उक्तः, ततोऽयं सातिशय उपायो – व्युत्थानमपि समाधिरसप्लुत-

मेव करोति इति भृशं रमे — इति उक्तेराशयः ।
केवलं तदुपायक्रमेण अयमुपायः प्ररोहमासा-
दयति — इति तथैव इह स्तोत्रकारेण क्रमेणोक्तः ।
चिता भावः चित्ता, चिन्ता इति अपपाठः ॥ ३८ ॥

न च इत्थं विमृश्यमानोऽपि प्रमेयभावमे-
ति इत्याह

सूक्ष्मोऽसि चेत्त्रिलोकीयं
कलामात्रं कथं तव ।
स्थूलोऽथ किं सुदर्शो न
ब्रह्मादिभिरपि प्रभो ॥ ३९ ॥

यत् पूर्वं

'प्रणवोर्ध्वार्धमात्रात ................ ।'

इति श्लोकेन उक्तं, तत्र इदं तत्त्वं — यत् परमेश्वरः
परप्रमात्रेकरूपो न कदाचित् प्रमेयतामेति, अ-
न्यथा अत्यन्ताणुरूपस्य कथमियं भवाभवाति-
भवरूपा त्रिलोकी अस्य कलामात्र—परिमितां-
शरूपा स्यात्, स्थूलत्वे तु ब्रह्मादिशिवान्तैः न

दुर्लक्ष्यः स्यात् ऐन्द्रियकप्रत्यक्षेणैव तं विषयी-
कुर्युः, न तु तदन्वेषणकान्दिशीकाः स्युः, यतः
सर्वथैव अपरिच्छेद्यः सर्वसर्वात्मकाचिदेकमूर्तिः
परमेशः ततः सर्वशास्त्राणि तत्रैव परिनिष्ठिता-
नि – इति तद्विचारपरा वयं युक्तकारिण एव
॥ ३६ ॥

अन्यथा

वाच्य एषां त्वमेवेति
नाभविष्यदिदं यदि ।
कः क्लेशं देव वाग्जाले-
ष्वकरिष्यत्सुधीस्तदा ॥ ४० ॥

वाग्जालानि – निगूहिततात्त्विकत्वत्स्वरूपता-
मिव दर्शयन्तः शास्त्रकल्लोलाः, वस्तुतस्तु श-
ब्दराशिशरीरमयत्वात् तात्त्विकत्वत्स्वरूपवि-
श्रान्तान्येव, अतो यदि एतत् नाभविष्यत् – न
प्रत्यभिज्ञास्यत, तत् क इव सुधीः – प्रामाणिकः,
एतद्विचारे क्लेशैकफले प्रावर्त्स्यत ॥ ४० ॥

यद्यपि वस्तुतो विश्वमयस्त्वं, तथापि एतत्स्व-रूपसाक्षात्कारयित्रा उपदेशेन मम प्रसादः क्रियतां — नैर्मल्यमास्थीयतां, यतः त्वत्प्रसादं विना न केनापि ध्यानधारणादिक्रियाक्रमेण तीक्ष्णविचाररूपया कयाचिदपि वा बुद्ध्या त्वं साक्षात्कार्यः, प्रत्युत सर्वक्रियाबुद्धिप्रत्यस्तमय एव 'त्वत्स्वरूपं भाति' — इति तत्प्रत्यस्तमयोऽयमुक्तपूर्वः प्रसादः क्रियतामित्येतदाह

क्रमेण कर्मणा केन
　　कया वा प्रज्ञया प्रभो।
दृश्योऽसीत्युपदेशेन
　　प्रसादः क्रियतां मम ॥ ४१ ॥

स्पष्टम् ॥ ४१ ॥

एवं प्रार्थनानन्तरमपि लब्धतत्साक्षात्कारो व्युत्थानेऽपि तत्संस्कारारूषिते तत्स्वरूपं स्तोतुमाह

नमो निरुपकार्याय
त्रैलोक्यैकोपकारिणे ।
सर्वस्य स्पृहणीयाय
निःस्पृहाय कपर्दिने ॥ ४२ ॥

व्यतिरिक्तस्य उपकर्तुः उपकारस्य वा अभावात् निरुपकार्याय – अनुपकार्याय, अत एव स्पृहणीयाभावात् निःस्पृहाय, कपर्दिने – जटिने, एतच्चाभिधानं निःस्पृहत्वौचित्येन उपात्तम्। एवम् अनुपकार्याय अस्पृहायापि च सर्वस्य अभीष्टसंपादनेन त्रैलोक्यैकोपकारिणे, अत एव च स्पृहणीयाय – निष्कारणमेव स्वस्वरूपनिर्मलीभावापादनेन अस्मदनुग्रहीत्रे तुभ्यमेव, शरीरादि जुहुमः – इति अनेन लोकोत्तरोत्कर्षवत्त्वं भगवत उक्तम् ॥ ४२ ॥

इत्थं भक्तिसंपूर्णमात्मानं सामान्योक्त्या श्लाघमान आह

अहो क्षेत्रज्ञता सेयं
कार्याय महते सताम्।
ययानन्तफलां भक्तिं
वपन्ति त्वय्यमी प्रभो॥ ४३॥

हे स्वामिन्, सताम्—अनुगृहीतानाम्, अहो—आश्चर्यं, क्षेत्रज्ञता—पुरुषता। अथ च क्षेत्रज्ञता—सर्वक्लेशसंसरणत्राणहेतुभूतं त्वां क्षेत्रं प्रति ज्ञता—बोद्धृता सा इयम् इति स्वात्मनि उपलब्धप्रभावा, महते—त्वदभेदाय, कार्याय—प्रयोजनाय, यया क्षेत्रज्ञतया हेतुना, अमी सन्तो भक्तिं—सेवां, व्यतिरिक्तफलवाञ्छात्यागेन त्वयि क्षेत्रे वपन्ति—बीजवत् रोहयन्ति। कीदृशीं भक्तिम्?—अनन्तम्—अपरिच्छिन्नं त्वत्क्षेत्रवापादेव त्वदैक्यावाप्तिरूपं फलं यस्यां ताम्॥ ४३॥

एवम् ईदृश्यां त्वत्स्वरूपनिधानप्रापिण्यां भक्तौ न प्ररोहयन्ति ये, ते त्वन्माययैव व्या-

मोहिता इत्याह

महतीयमहो माया
तव मायिन्ययावृतः ।
त्वद्ध्याननिधिलाभेऽपि
मुग्धो लोकः श्लथायते ॥ ४४ ॥

महती — दुरतिक्रमा, माया — अख्यातिः, मायिन्, — स्वरूपगोपनपर, यया स्वरूपगोपनसतत्त्वया आवृत आच्छादिततत्त्वदृष्टिर्मुग्धः — तत्त्वाविवेकी जनः श्लथायते — त्वद्भक्तौ प्राप्तायामपि न तन्मयीभवति ॥ ४४ ॥

तदित्थं सर्वत्र त्वमेव कर्ता इत्याह

आरम्भे भव सर्वत्र
कर्म वा करणादि वा ।
विश्वमस्तु स्वतन्त्रस्तु
कर्ता तत्रैकको भवान् ॥ ४५ ॥

हे भव, सर्वत्र – शिवादिकीटान्तप्रमातृसंबन्धिनि आरम्भे – व्यापारे, यत्किञ्चित् कर्तृकरणादिरूपमिव आभाति, तत्सर्वं कर्म वा तवैव स्वतन्त्रस्य कर्तुः अवभासनात्मना क्रियया तथा आभासितत्वेन कार्यं भवतु । यदि वा त्वयैव मितक्रियासाधकतमत्वादिना अवभासितत्वात् करणादि तदस्तु, सर्वत्र पुनरत्र नानाकारकवैचित्र्यात्मना स्फुरत्यपि त्वमेव एकः – अन्यानपेक्षः स्वतन्त्रः कर्ता; अन्यस्तु त्वदाभास्यत्वादेव अस्वतन्त्रः – इति कथं कर्ता स्यात् । यत्तु ब्रह्मादीनां सृष्ट्यादौ कर्तृत्वं, तत् तेषा त्वदुत्थापिततत्तदभिमानमात्रतत्त्वम् । यदुक्तं श्रीविद्याधिपतिना

> 'उत्तरोत्तरमनुग्रहैः पदं
> पश्यतोऽप्यधरमुत्तरस्य यः ।
> साधनस्य निजभावनाग्रहो
> हेतुरत्र भवतो मरीचयः ॥'

इति ॥ ४५ ॥

यत एवम्—अतः,

त्रिगुणत्रिपरिस्पन्द-
द्वन्द्वग्रस्तं जगत्त्रयम्।
उद्धर्तुं भवतोऽन्यस्य
कस्य शक्तिः कृपाथ वा ॥ ४६ ॥

त्रयाणां सत्त्वादिगुणानां यः प्रकाशप्रवृत्ति-स्थित्यात्मा त्रिविधः परिस्पन्दः, तद्रूपाणि यानि देहप्राणपुर्यष्टकगतानि शीतोष्णक्षुत्तृष्णासुखदुःखरागद्वेषजननमरणानि द्वन्द्वानि, तैः ग्रस्तम्—आत्मसात्कृतं जगत्त्रयं—जागरस्वप्नसुषुप्ताविष्टं जन्तुचक्रं, तदुद्धर्तुं—तुर्यतुर्यातीतपदम् अवलम्बयितुं, तवैव आचार्यस्य मन्त्रमन्त्रेश्वरादिभूमिषु माहात्म्यव्यञ्जिका शक्तिः—सामर्थ्यं कृपापि वा—अनुजिघृक्षात्मा, नान्यस्य कस्यापि कदापि। तदुक्तम्

'आचार्यदेहमास्थाय शिवः पाशान्निकृन्तति।'

इति।

'...................शतमष्टादशोत्तरम् ।
अनुगृह्य शिवः साक्षान्मन्त्रेशत्वे नियुक्तवान् ॥'

इति ॥ ४६ ॥

एवं त्वदैक्यभावनाभावाभावावेव गुणदोषौ इत्याह

दोषोऽपि देव को दोष-
स्त्वामाप्तुं यः समास्थितः ।
गुणोऽपि च गुणः को नु
त्वां नाप्तुं यः समास्थितः ॥ ४७ ॥

हे देव, विश्वक्रीडादिपर, विषयतृष्णावानपि यः त्वदैकध्यविमर्शमयः स गुणवानेव; यस्तु पाण्डित्यवैराग्यादिगुणयुक्तोऽपि न त्वद्विमर्शसारः स दोषी शोच्यप्रज्ञ एव, समास्थितः — सम्यक् अभेदापत्त्या आ समन्तात् स्थितः — अभिनिविष्टः ॥ ४७ ॥

---

पं० ३ ग० पु० इति शब्दात् अनन्तरं 'यतश्च त्वमेव विश्वानुग्रहीता' इत्यंशोऽधिको दृश्यते ।

अतश्च

रागोऽप्यस्तु जगन्नाथ
मम त्वय्येव यः स्थितः ।
लोभायापि नमस्तस्मै
त्वल्लाभालम्बनाय मे ॥ ४७ ॥

त्वय्येव, न तु त्वयि च फले च । नम इत्य-नेन भगवद्भक्त्युद्रेकमेव द्रढयति । रागः—स्पृहा, लोभः—सर्वस्ववत् परिरक्षणं, त्वल्लाभो—भवत्समावेशः, आलम्बनं—विषयो यस्य ॥ ४७ ॥

ईदृग्रागलोभात्मा त्वद्भावना विश्वमुद्धरति-इत्याह

अहो महदिदं कर्म
देव त्वद्भावनात्मकम् ।
आब्रह्माक्रिमि यस्मिन्नो
मुक्तयेऽधिक्रियेत कः ॥ ४८ ॥

वैदिकज्योतिष्टोमादिभावनात्मके कर्मणि स्वर्गप्रदे द्विज एव अधिकृतः, त्वद्भावनात्मके कर्मणि तु आ प्रजापतेः क्रिम्यन्तं त्वदिच्छयैव मुक्त्यर्थं विश्वम् अधिकारि कृतम्, इति अर्थशक्त्या व्यतिरेकध्वनिना अप्रतिहतं स्वातन्त्र्यं भगवता व्यञ्जयता अद्भुतरसो ध्वन्यते ॥ ४८ ॥

किं च

आरम्भः सर्वकार्याणां
पर्यन्तः सर्वकर्मणाम् ।
तदन्तर्वृत्तयश्चित्रा-
स्तवैवेश धियः पथि ॥ ४९ ॥

हे ईश - स्वतन्त्र, त्वत्संविदेव सर्वेषां भोगापवर्गादिकार्याणां तद्व्यापाराणां च प्रारम्भसमाप्तिमध्यानि वेत्ति ॥ ४९ ॥

यद्यपि त्वत्संवित् विश्वमाभासयति, तथापि

तदाभासितायां भक्तेः कोऽपि महिमा अस्ति इत्याह

यावदुत्तरमास्वाद-
सहस्रगुणविस्तरः।
त्वद्भक्तिरसपीयूषा-
न्नाथ नान्यत्र दृश्यते ॥ ५० ॥

यद्यत् उत्तरं यावदुत्तरं, हे नाथ—प्रार्थनीयस्वरूप, समावेशात्मा यः त्वद्भक्तिरसः, स एव परमानन्दमयत्वात् पीयूषं, ततोऽन्यत्र न क्वापि यावदुत्तरं क्रमात्क्रमम् आस्वादानां—चमत्काराणाम् आनन्दसन्दोहानां, सहस्रगुणो—निःसंख्यो, विस्तरो— विस्तारो दृश्यते, त्वद्भक्तिरेव उत्तरोत्तरं प्रकृष्टाः परमानन्दसंपदो वितरति। आस्वाद्य इत्यपपाठः। विस्तर इति अशब्दविषयः शब्दः चिन्त्यः, 'प्रथने वावशब्दे'

---

पं० १ क० पु० तदाभास्यतया इति पाठः।

इति अशब्दविषये नियमितत्वात् ॥ ५० ॥

यत एवं, तेन

> उपसंहृतकामाय
> 　　कामायतिमतन्वते ।
> अवतंसितसोमाय
> 　　सोमाय स्वामिने नमः ॥ ५१ ॥

सह उमया देव्या—स्वातन्त्र्यशक्त्या वर्तते यः स्वामी—चिदात्मा महेश्वरः, परशक्तिरूपनिजोत्तमाङ्गसंगमितसमस्तमेयचन्द्रः अत एव व्यतिरिक्तार्थनीयार्थाभावात् उप—समीपे आत्मन्येव संहृतकामः—स्वानन्दचमत्कारनित्यतृप्तः, अत एव परिपूर्णत्वात् सर्वाम् आयतिं – मूर्तिक्रियावैचित्र्यविस्तृतिं तन्वन्—नित्यं स्वात्मनि प्रथयन् यः, तस्मै नमः, इति आन्तरेण क्रमेणार्थः ।

बाह्येन तु दग्धमन्मथाय, आयतिम् आगामिनं शुभं कालं, कैलासादिषु नित्यप्रवर्तमान-

प्रमोदनिर्भरक्रीडामयं लोकोत्तरप्रभावं विस्तारयित्रे, उमादेहार्धधारिणे, धृतचन्द्रकलाभरणाय नम इत्यर्थः। मन्मथदाहिनोऽपि च आलम्बनोद्दीपनाविभावसंपूर्णासामान्यशृङ्गाराविष्टत्वम् इति आकृतिमत्त्वेऽपि अतिदुर्घटमैश्वर्यमुक्तम्।

अथ च उपसंहृताः—भक्तिमतः परिपूर्णस्वरूपप्रथनेन प्रशमिताः, सर्वे कामा—अभिलाषाः येन, तत एव च काम् आयतिम् अतन्वते— सर्वं कालं मोक्षलक्ष्मीसमाश्लेषमयं दर्शयित्रे, स्वामिने नम इति अयमपि अस्यार्थः॥ ५१॥

एवं तावत् भक्तिद्रविणपरिरक्षाप्रवण एवास्मि, तथापि तु यदि वशिनस्ते मायाशक्तिः मां विस्मृतस्वरूपं मध्ये करोति, तत्

किमशक्तः करोमीति
सर्वत्रानध्यवस्यतः।
सर्वानुग्राहिका शक्तिः
शाङ्करी शरणं मम॥ ५२॥

क्रीडामयमहेश्वरमायाशक्त्या कयाचित् व्युत्थानदशायां व्यामोहितत्वात् अशक्तः किम् अहं करोमि, न किंचित् इति सर्वत्र शरीरमनोवाग्व्यापारेषु अनध्यवस्यतः—कुत्रापि अध्यवसायम् अगृह्णतः परमेश्वरानियोगतः कान्दिशीकस्य मम पराद्वयप्रथात्मकश्रेयस्करणात् शंकरस्य सम्बन्धिनी शक्तिः सर्वानुग्रहैकप्रयोजना शरणं, सैव मां पुनरुद्बोधयिष्यति इत्यर्थः ॥ ५२ ॥

न चैवं वक्तव्यं शंकरोऽनुग्रहैकप्रयोजनः, अन्यस्तु कश्चित् ईश्वरो मोहको भविष्यति इति, यतः

गुणातीतस्य निर्दिष्ट-
निःशेषातिशयात्मनः।
लभ्यते भव कुत्रांशे
परः प्रतिनिधिस्तव ॥ ५३ ॥

हं भव— प्रकाशैकात्मना रूपेण नित्याव-स्थित, सत्त्वादिगुणयोगात् मायाप्रमातॄणां नानाता भवति, त्वं तु गुणातीतः स्वतन्त्रचिदेक-मूर्तिरिति, तादृशस्य तव अंशमात्रेऽपि कः प्रतिनिधिः—तुल्यः अस्ति, चितो भेदकस्य कस्यापि अभावात् । अतः कथं परिपन्थकेश्वराशंका, अत एव परमेश्वरः

'………स्वतन्त्रस्तु कर्ता तत्रैकको भवान् ।'

इत्यादिना निर्दिष्टनिःशेषातिशयात्मा प्रतिपादितसकलोत्कर्षस्वभावः। निर्मृष्टेति पाठे समुत्पुंसितसर्वातिशयः महासामान्यचिदेकमात्ररूप आत्मा यस्य इति योज्यम् ॥ ५३ ॥

अतश्च तवैव वशिनो मायया क्वचित् व्युत्थाने व्यामोह्यमाना त्वत्प्रकाशाय त्वामेव तारं क्रन्दामः, यदाह

निर्द्वन्द्वे निरुपाधौ च
त्वय्यात्मनि सति प्रभो ।
वयं वञ्च्यामहेऽद्यापि
माययामेयया तव ॥ ५४ ॥

हे प्रभो — दासवत्सल, निर्द्वन्द्वे — परमाद्वयरूपे, तथा देशकालाकारेभ्यः उपाधिभ्यो निष्क्रान्ते त्वयि महादेवे, न तु पुर्यष्टकादिरूपे आत्मनि सति तथात्वेन निश्चित्य निष्ठापितेऽपि वयम् अद्यापि ईदृशीं प्रबोधधाराम् अधिरूढा अपि, तव वशिनः अमेयया मायया वञ्च्यामहे — मनाङ्मात्रं देहप्रमातृतासंस्कारेण न त्यज्यामहे, अतः स्वामिन्, तवैवैतद्विदितं कृत्यं, त्वं तथा कुरु—यथा अयं मायासंस्कारोऽपि अस्माकं त्वद्दासानां शाम्यति। तदुक्तं मयापि स्वस्तोत्रे

> 'उन्मूलितापि शतशो दलितापि सहस्रशः।
> गोनासेवाप्रथोदेति द्रागत्र शरणं शिवः॥'

इति॥ ५४॥

न चैतत्प्रशमनं दुरासदम्, यतः

> अणिमादिगुणावाप्तिः
> सदैश्वर्यं भवत्तयः।
> अमी भव भवद्भक्ति-
> कल्पपादपपल्लवाः॥ ५५॥

अणिमाद्यवाप्तिः ब्रह्मादीनां, सदैश्वर्यं सदाशिवादीनां, भवत्वयः शुद्धात्मनाम्, इत्येते त्वद्भक्तिकल्पवृक्षस्य पल्लवाः, न तु कुसुमानि फलानि वा, कुसुमं हि अस्य त्वच्छक्तिमयत्वं, फलं तु त्वन्मयतैव, यतश्च भवत्वयः त्वद्भक्तेः पल्लवः, ततो भवद्भक्तिभाजामस्माकं त्वत्प्रसादात् मायासंस्कारोऽवश्यं नङ्क्ष्यति इत्याशयशेषः। उक्तं च विज्ञानभैरवे

> 'भक्त्युद्रेकाद्विरक्तस्य यादृशी जायते मतिः।
> सा शक्तिः शाङ्करी नित्यं भावयेत्तां ततः शिवः ॥'

इति ॥ ५५ ॥

एवं भक्त्युद्रेकेण उत्तेजितो गलितानिःशेषदेहसंस्कारां महेश्वरतन्मयतामेव आशंसन् आह

> या या दिक्तत्र न क्वासि
> सर्वः कालो भवन्मयः।
> इति लब्धोऽपि कर्हि त्वं,
> लप्स्यसे नाथ कथ्यताम् ॥ ५६ ॥

दिश्यते इति दिक् देशः, यः कश्चित् मूर्त्यात्मा देशः, क्रियात्मा वा कालः, स सर्वः चेत्यमानत्वात् चिदेकात्मैव इत्यनेन न्यायेन लब्धोऽपि— आसादितोऽपि विश्वमयः त्वं, कर्हि— कदा, लप्स्यसे— गलितसूक्ष्मतमदेहसंस्कारकलाविघ्नं त्वदात्मसद्भावं कदा आप्स्यामः— इत्येतत् नाथ — स्वामिन्, दासानाम् आदेश्यताम् । इति गाढपरिचयप्रणयानिर्भरोक्तिः ॥ ५६ ॥

पुनर्भक्तिभरेण नमस्कर्तुमाह

नमः प्रसन्नसद्वृत्त-
मानसैकनिवासिने ।
भूरिभूतिसिताङ्गाय
महाहंसाय शंभवे ॥ ५७ ॥

शंभवे महाहंसाय नमः, हंसत्वं प्राग्वत्, महत्त्वं तु सर्वक्षेत्रज्ञरुद्रापेक्षया, सर्व एव हि प्रमातारः स्वोचितसर्गसंहाररूपहानसमादानधर्मत्वात् हंसाः, शंभुस्तु तेषामपि सर्गसंहारकृत्

इति महाहंसः । अत एव श्रीस्वच्छन्दे

'शिवो धर्मेण हंसस्तु ............।'

इति उपक्रम्य

'आत्मा वै हंसः ...............।'

इत्यादि उक्तम् । कीदृशाय शंभवे ? प्रसन्नं—भवद्भक्तिभरेण तात्त्विकेऽर्थे निःसंशयं, यत् सद्वृत्तानां—त्वद्भावनात्मकभव्यचरितानां मानसं—चेतः, तत्र एकस्मिन् निवसति—अगूहितात्मत्वेन स्फुरति ताच्छील्येन यः तस्मै, तथा भूरिः—महती विश्ववैचित्र्यात्मा माया भूतिः—विभवः तया सितं— संबद्धम् अङ्गं—ज्ञानाक्रियात्मकशक्तिरूपं स्वरूपं यस्य तस्मै । महाहंसश्च प्रसन्नमानसाख्यसरोनिवासी भूरिभूतिवत् सिताङ्गो भवति इति अनुरणनार्थः ॥ ५७ ॥

अतश्च

हतोद्धततमस्तान्तिः
प्लुष्टाशेषभवेन्धना ।
त्वद्बोधदीपिका मेऽस्तु
नाथ त्वद्भक्तिदीपिका ॥ ५८ ॥

हे नाथ, त्वद्भक्तिरेव प्रकाशकत्वात् दीपशिखा, त्वद्बोधस्य—भवदीयमहाप्रकाशस्य दीपिका अस्तु— अभिव्यञ्जिका अस्तु, कीदृशी असौ? हृता उद्धृता तमस्तान्तिः— अख्यातिकदर्थना यया, तथा प्लुष्टं— दग्धम् अशेषं भवेन्धनं— संसारदारु यया। दीपशिखा कृतकज्जलात्मकतमस्तान्तिः अदग्धसमस्तवर्तिः घटादि प्रकाशयति, अतो विलक्षणा इयं त्वद्बोधदीपिका इति व्यतिरेकालङ्कारः ॥ ५८ ॥

रूपान्तरेण विमृशन् आह

विसृष्टानेकसद्बीज-
गर्भं त्रैलोक्यनाटकम्।
प्रस्ताव्य हर संहर्तुं
त्वत्तः कोऽन्यः कविः क्षमः॥ ५९ ॥

हे हर—विश्वसंहरणपर, भवाभवातिभवरूपं त्रैलोक्यं वागङ्गाहार्यसात्त्विकादिविविधधर्मयोगात्

पं० १० ग० पु० रूपयान्तरेण इति पाठः।

नाटकमिव – अभिनेयकाव्यमिव प्रस्ताव्य–प्रक्रम्य, संहर्तुं– प्रशमयितुं त्वत्तः अन्यः कः, कविः– प्रजापतिः क्षमः, न कश्चित् इत्यर्थः। कीदृशं? विसृष्टम् – उत्पादितम् अनेकं सतां – सत्त्वेन प्रदर्श्यमानानां भावानां बीजं – मायाप्रकृत्यादि गर्भे– अन्तः यस्य। नाटकाख्यं च काव्यविशेषं प्रस्तावनायां मुखसन्धिना प्रस्ताव्य–संक्षेपेण उपक्षिप्य, संहर्तुं–निर्वहणसन्धिना निर्वाहयितुं कश्चिदेव धाराधिरूढः कविः शक्तो भवति न सर्वः। यदाहुः

'नाटकं ख्यातवृत्तं स्यात् ............... ।'

इति। कीदृक् नाटकं? विसृष्टं नि.............. संबन्धबीजादिकम.................... यस्मिन् सन्धौ यस्य.................... गर्भावमर्शनिर्वहण ............... राज्यलाभादेः प्रयोजनादीनि गर्भसन्धौ निक्षिप्यन्ते। यदाह स्म भरतमुनिः

---

पं० ७ ग० पु० प्रस्तावनया इति पाठः।

'बीजं बिन्दुः पताका च प्रकरी कार्यमेव च।
अर्थप्रकृतयः पञ्च गर्भसन्धौ व्यवस्थिताः॥'

इति। एषां च स्वरूपं प्रदर्श्यमानं ग्रन्थवैतत्य-मानयत्प्रकृतानुपयोगि इति न उक्तम्॥ ५९॥

यतो नान्यः कश्चिदेवं कर्तुं क्षमः, ततः

नमः सदसतां कर्तु-
मसत्त्वं सत्त्वमेव वा।
स्वतन्त्रायास्वतन्त्राय
व्ययैश्वर्यैकशालिने॥ ६०॥

सतां—विद्यमानानां जगद्वर्तिनाम् अर्थाना-म्, असत्त्वं—संहारम्, असतां—वा संहृतत्वात् प्रख्योपाख्याशून्यानां सत्त्वं—पुनर्जननं, कर्तुं स्वतन्त्राय—अनन्यापेक्षसामर्थ्याय, तथा अस्व-तन्त्राणां सर्वेषामेव ब्रह्मादीनां यानि आय-व्ययैश्वर्याणि—उत्पादविनाशविभवाः तैः अ-स्वतन्त्रायव्ययैश्वर्यैः स्वाभेदेन स्फुरद्भिः ए-कः—अद्वितीयः शालते—श्लाघते यः तस्मै॥ ६०॥

भक्त्यतिशयप्रकाशिततात्त्विकस्वरूपं भगवन्तं पुनरपि स्तोतुमाह

त्रैलोक्येऽप्यत्र यो यावा-
नानन्दः कश्चिदीक्ष्यते।
स बिन्दुर्यस्य तं वन्दे
देवमानन्दसागरम् ॥ ६१ ॥

व्याख्यातस्वरूपे त्रैलोक्ये, यो यावान् इति—यः कश्चित्, आ शिवात् सकलप्रमातृपर्यन्तम् आनन्दः स्फुरति, स सर्व एव यस्य बिन्दुः—विप्रुण्मात्रं क्रीडादिपरमानन्दसागरम् अपर्यन्तानन्दसमुद्रं वन्दे—समाविशामि। इत्थं च तत्तत्परिमितानन्देऽपि एकाग्रीभावितचित्तः परमानन्दमाविशति योगिजन इति उपदेशदिक्-दर्शिता। यथोक्तं श्रीविज्ञानभैरवे

'जग्धिपानकृतोल्लासरसानन्दविजृम्भणात्।
भावयेद्भरितावस्थां महानन्दस्ततो भवेत्॥'

इति ॥ ६१ ॥

यत ईदृशो देवः, ततः

अहो ब्रह्मादयो धन्या
ये विमुक्तान्यसंकथम्।
नमो नमः शिवायेति
जपन्त्याह्लादविह्वलाः॥ ६२ ॥

विमुक्तान्यसंकथं कृत्वा, तदेकाग्रीभावेन आह्लादेन—जपवशोन्मिषितेन आनन्देन वि-ह्वलाः—विस्मृतव्यवहाराः॥ ६२॥

किं च

निष्कामायापि कामाना-
मनन्तानां विधायिने।
अनादित्वेऽपि विश्वस्य
भोक्त्रे भव नमोऽस्तु ते॥ ६३॥

परिपूर्णानन्दत्वादेव कामेभ्यः—अभिलाषे-भ्यो निष्क्रान्तायापि विचित्रभोगापवर्गात्मका-

नां काम्यमानानाम् अर्थानां संपादकाय, तथा अनादित्वेऽपि–विश्वस्य आदिभूताद्वितीयरूपत्वेपि नित्यं स्वभित्त्युल्लासितस्य विश्वस्य भोग्यभूतस्य भोक्त्रे–चमत्कर्त्रे, यस्य च कामाः न सन्ति स कथं तान् ददाति, यश्च अनादी–अनदनशीलः स कथं विश्वस्य भोक्ता स्यात् इति विरोधालंकारः ॥६३॥

किं च

स्तुमस्त्रिभुवनारम्भ-
मूलप्रकृतिमीश्वरम्।
लिप्सेरन्नोपकारं के
यतः संपूर्णधर्मणः ॥ ६४ ॥

त्रिभुवनं प्राग्वत्, तदारम्भमूलप्रकृतिम् इति सर्वकारणकारणम्, अत एव ईश्वरं–सर्वत्र अप्रतिहतसामर्थ्यं, स्तुमः। यतः संपूर्णः सर्वातिशायी धर्मः– स्वातन्त्र्यात्मा स्वभावो यस्य, तस्मात्

के इव उपकारं स्वोचितैश्वर्यलाभं न लिप्से-
रन्—न अर्थयेरन्, सर्वे हि ब्रह्माद्याः महेश्वरेणैव
वितीर्णतत्तद्विभूतिविप्रुषः कृताः ॥ ६४ ॥

च

महत्स्वप्यर्थकृच्छ्रेषु
मोहौघमलिनीकृताः ।
स्मृते यस्मिन् प्रसीदन्ति
मतयस्तं शिवं स्तुमः ॥ ६५ ॥

पर्यवसाययितुम् अशक्यत्वात् महत्सु गु-
रुष्वपि अर्थकृच्छ्रेषु—जगद्विचारादिप्रयोजन-
संकटेषु विषयेषु, मोहौघेन—मायास्फारेण म-
लिनीकृताः—स्थगिततात्त्विकप्रकाशा मतयः—
संविदो, यस्मिन् स्मृते—विमृष्टमात्रे सति,
प्रसीदन्ति—मायाकालुष्यं उज्झित्वा तत्त्वज्ञा-
नवत्यो जायन्ते, तं शिवं—श्रेयोमयं स्तुमः—
अभेदेन विमृशामः ॥ ६५ ॥

सर्वमेतत् त्वयैव सुकरम् इत्याह

प्रभो भवत एवेह
प्रभुशक्तिरभङ्गुरा ।
यदिच्छया प्रतायेते
त्रैलोक्यस्य लयोदयौ ॥ ६६ ॥

इच्छयैव यः त्रैलोक्यलयोदयकृत् तस्य कियत् एतत्, अन्यस्तु त्वदेकायत्तवृत्तिः भंगुरशक्तिरेव इत्यर्थः ॥ ६६ ॥

तव च इयत् निरर्गलं स्वातन्त्र्यम् इत्याह

कुकर्मापि यमुद्दिश्य
देवं स्यात्सुकृतं परम् ।
सुकृतस्यापि सौकृत्यं
यतोऽन्यत्र न सोऽसि भोः ॥६७॥

देवः—क्रीडादिपरः परमेश्वर एव 'अहं सर्वमिदं करोमि' इति धिया क्रियमाणं कुत्सितं निषिद्धमपि कर्म सुकृतं, यत्तु अश्वमेधादि

सुकृतमपि फलाभिलाषमुषितमानसतया क्रियते तत् कुकर्म इति भगवद्भेदभावनाभावाभावाभ्यां यत् करणं तदेव सुकृतदुष्कृतयोः वास्तवं लक्षणं, सोऽसि भोः इत्यनेन अनुत्तरं पारमेश्वरं स्वरूपं सोल्लसात्माभिमुखीभावेन विमृशति ॥ ६७ ॥

यत ईदृशः त्वम्, अतः

एष मुष्ट्या गृहीतोऽसि
दृष्ट एष क्व यासि नः ।
इति भक्तिरसाध्माता
धन्या धावन्ति धूर्जटिम् ॥६८॥

एषसर्वदशासु चिन्मयत्वेन स्फुरन्, मुष्ट्या गृहीतोऽसि—स्वात्मीकृत एवासि, एष च दृष्टोऽसि—साक्षात्कृतोऽसि, सर्वदैव चित्प्रकाशरूपतया स्फुटमेव असि स्फुरन् स्थितः, अत एव नः—अस्माकं क्व यासि न क्वापि

स्वरूपं गूहयितुं शक्नोषि, सर्वं हि अस्माकं त्व-न्मयमेव चकासत् स्थितम् इति—ईदृशेन स-ततोदितत्वत्समावेशात्मना भक्तिरसेन ये आ-ध्माताः—प्रोद्दीपितसंविदः ते धूर्जटिं—महा-देवं धावन्ति—राभस्येन अनुसरन्ति, सर्वद-शासु प्रसर्पन्तम् अननुप्रविष्टाख्यातिव्यव-धानं परामृशन्ति, अत एव धन्याः परमद्र-विणपूर्णा विद्वच्छ्लाघ्याश्च ॥ ६८ ॥

किं च

स्तुमस्त्वामृग्यजुःसाम्नां
शुक्रतः परतः परम् ।
यस्य वेदात्मिकाज्ञेय-
महो गम्भीरसुन्दरी ॥ ६९ ॥

ऋगादिवेदत्रयस्य यत् परं शुक्रं, तदभेद-विमर्शमयं—बोधादित्यप्रतिभात्मकप्रणवतेजो-रूपं, ततोऽपि परं—बोधादित्यरूपं त्वां स्तुमः, यस्य इयं वेदात्मिका आज्ञा—नियोगः, कर्म-

काण्ड-देवताकाण्ड-ज्ञानकाण्डवाक्यैकवाक्यता-ज्ञानस्य कैश्चिदेव प्राप्यत्वात् गम्भीरा 'वि-ज्ञानमानन्दं ब्रह्म' इति वेदान्तेषु प्रतिपादित-दृष्टया परमानन्दविश्रान्तिप्रदत्वात् सुन्दरी, एवं च अभिदधतोऽयमाशयः—यत् नियोगरू-पाज्ञात्मा अयं वेदार्थः स नियोक्तरि—आज्ञातरि सति उपपद्यते, अन्यथा कथमिव जडस्य श-ब्दस्य संघटनार्थवत्त्वं नियोक्तृत्वं वा स्यात्, नियोक्तृत्वं च भगवतो गायत्र्यैव उक्तमपि श्रो-त्रियैः जाड्यात् न चेत्यते। यद् अभिधास्यति

'गायत्र्या गीयते यस्य धियां तेजः प्रचोदकम्।'

इति ॥ ६९ ॥

एवमाज्ञारूपनियोगविचारलब्धं नियोक्तारं स्तुत्वा, विधिवाक्यार्थपक्षस्यापि सेश्वरत्वमेव—इति अभिधत्ते

विधिरादिस्तथान्तोऽसि
विश्वस्य परमेश्वर।
धर्मग्रामः प्रवृत्तो य-
स्त्वत्तो न स कुतो भवेत्॥ ७० ॥

यजेत, न हिंस्यात्, इत्यादिरूपो यो विधिः कर्तव्येतरप्रविभागः, आदिः—इति तस्मिन् विधौ विधाता, अन्तो—विहितार्थनिष्पत्त्या तत्तत्फलाविर्भावः, सर्वोऽपि त्वमेव स्वतन्त्रचिदात्मा, तथा विध्यादिरूपतया भाससे इत्यर्थः। अन्यथा विश्वस्य यो धर्मग्रामो—विचित्रस्वभावपरिस्पन्दः प्रवृत्तः स यदि न त्वत्तः तत् कुतो भवेत्, त्वां विना नैव भवेत्, प्रकाशभित्तिं विना कस्यापि अप्रकाशनात् इत्यर्थः। यदाहुः श्रुत्यन्तविदः

'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति'

इति। विधिनैव च भावनापक्षोऽपि कृतोत्तरः ॥ ७० ॥

यदि श्रुत्यन्तानुसारेण सर्वं भगवन्मयं, तत् कस्मात् कर्मकाण्डेषु ज्ञानमेव न उपदिश्यते, कथं च ज्ञानकाण्डेषु तदेव निषिध्यत?—इति संशयं शमयति स्तुतिद्वारेण

नमस्ते भवसंभ्रान्त-
भ्रान्तिमुद्भाव्य भिन्दते ।
ज्ञानानन्दं च निर्द्वन्द्वं
देव वृत्वा विवृण्वते ॥ ७१ ॥

हे देव — स्वतन्त्रचेष्टित, भवे — संसारे ये संभ्रान्ताः— त्वन्मायाशक्तिवशात् व्यामूढाः, तत एव च भेदासक्तत्वात् कर्मनिष्ठाः तेषां पूर्वकक्ष्यायां तां तां भेदभ्रान्तिम् उद्भाव्य सिद्धान्तकक्ष्यायां भिन्दते— ध्वंसकाय, तथा ज्ञानानन्दं— परमाद्वयरूपं विज्ञानम् आनन्दमयं वृत्वा—प्रथमं रहस्यत्वात् अयोग्यान् प्रति आच्छाद्य, पश्चात् योग्यान् प्रति विवृण्वते—स्फुटीकुर्वते तुभ्यं नमः। एवं च यत् पूर्वपक्षतया कर्मकाण्डस्वरूपं भगवता हेयत्वेन दर्शितं, तदेव मूढैः उपादेयत्वेन अभ्युपगम्य, ज्ञानकाण्डस्य अर्थवादत्वम् उच्यते। अथ वा-भगवतैव सृष्ट्यादिकृत्यचतुष्टयरचायै ते ता-

दृशाश्वासवन्तो व्यामोहिताः स्थापिताः। सं-
भ्रान्तिम् इति अपपाठः ॥ ७१ ॥

यथा परमेश्वरः तत्तद्वेदसंहितादिशास्त्रेषु भ्रान्तिमुद्भाव्य भिन्दन्, ज्ञानानन्दं विवृणोति, तथा अस्माकमपि मायामुद्भावितां भित्त्वा ज्ञानानन्दमेव प्रकाशयतु इत्याह

यस्याः प्राप्येत पर्यन्त-
विशेषः कैर्मनोरथैः।
मायामेकनिमेषेण
मुष्णंस्तां पातु नः शिवः॥ ७२ ॥

यस्याः चिदभेदाप्रथात्मनो मायायाः पर्यन्तस्य विशेषः परकाष्ठाचिदद्वयमयताप्राप्तिलक्षणः कैः ब्रह्मादिभिः प्रमातृभिः कैः मनोरथैः प्राप्येत, सर्वस्य मनोरथानामपि, अविषयः, तां मायाम् एकनिमेषेण मुष्णन्—स्वरूपोन्मेषमात्रेणैव अपहरन्, शिवः—श्रेयःप्रदः, नः—अस्मा-

न् पातु—मायासंस्कारगोचरात् रक्षतु; यथा अख्यातिः नाम्नापि नात्रातिष्ठते ॥ ७२ ॥

मायापर्यन्तविशेषो यादृक् भक्तिभाजामेव दर्शनयोग्यः—तत् प्रकटयति

वैराग्यस्य गतिं गुर्वीं
ज्ञानस्य परमां श्रियम्।
नैःस्पृह्यस्य परां कोटिं
बिभ्रतां त्वं प्रभो प्रभुः ॥ ७३ ॥

हे प्रभो परमेश्वर, वैराग्यस्य— विषयवितृष्णत्वस्य, गुर्वीं— काष्ठाप्राप्तां सदाशिवादिपदमपि तृणवत् मन्यमानां, गतिं—प्रतीतिं, तथा ज्ञानस्य तत्त्वावबोधस्य, परमां—वैष्णव-लाकुल-पाशुपताद्युक्तमितज्ञानहान्या विश्वोत्तीर्ण-विश्वमय-चिदानन्दसुन्दर-स्वतन्त्र-सततावभास्वर-परमाद्वयस्वात्मप्रथारूपां श्रियं—परां विभूतिं,

पं० १२ ग० पु० वैष्णवनाकुल इति पाठः।

तथा नैःस्पृह्यस्य — यथोक्तज्ञानलक्ष्मीप्राप्त्यु-
पायान्वेषणवैमुख्यस्य च, परां — धाराधिरूढां
कोटिं सकलमुद्रामन्त्रध्यानाद्यपहस्तनरूपाम् ।
यदाह स्म कश्चित्

'अपरोक्षे भवत्तत्त्वे सर्वतः प्रकटे स्थिते ।
यैरुपायाः प्रतन्यन्ते नूनं त्वां न विदन्ति ते ॥'

इति । एवमीदृशीं निःस्पृहत्वस्य परां कोटिं-
विश्रान्तिं ये बिभ्रति—वहन्ति, तेषां मायापार-
दृश्वानां, त्वं प्रभुः— निरर्गलाः ते तव दासाः, अ-
तश्च ईदृशानामस्माकं त्वमुन्मेषमात्रेणैव मायां
मुष्णासि इत्यर्थः ॥ ७३ ॥

असामान्यश्च एषां त्वं प्रभुरित्याह

ब्रह्मणोऽपि भवान्ब्रह्म
कस्य नेशस्त्वमीशितुः ।
जगत्कल्याणकल्याणं
कियत्त्वमिति वेत्ति कः ॥ ७४ ॥

जगतो—विश्वस्य मध्ये, यत् कल्याणम्—ईश-सदाशिव-शिवाः, तेषामपि कल्याणं—पूर्ण-चिदानन्दघनस्वात्मप्रथनेन अनुग्राहकं कियत् माहात्म्यम् इति एतत् को वेत्ति,—अपरिच्छेद्य-महिमा असि इत्यर्थः, यतो ब्रह्मणोपि—महा-प्रकाशरूपस्य वेदान्तोपास्यस्य, भवान् ब्रह्म-स्वातन्त्र्यशक्तिमयत्वेन उत्कृष्टोऽसि, विश्वनि-र्माणशक्तिदानेन बृंहकश्च । यदुक्तं गीतासु

'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं ददाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥'

इति । तथा

'नपुंसकमिदं नाथ परं ब्रह्म फलेत् कियत् ।
तत्पौरुषनियोक्त्री चेन्न स्यात्त्वच्छक्तिसुन्दरी ॥'

इति । तथा कस्य ब्रह्मादेः शिवान्तस्य ईशितुः त्वं न ईशः अपि तु सर्वस्यैव स्वामी ॥ ७४ ॥

पं० १३ तत्पौरुषी नियोक्त्री चेन्न स्यात्त्वच्छक्तिसुन्दरी इति पाठः ।

अतश्च

किमन्यैर्बन्धुभिः किं च
सुहृद्भिः स्वामिभिस्तथा ।
सर्वस्थाने ममेश त्वं
य उद्धर्ता भवार्णवात् ॥ ७५ ॥

हे ईश—सर्वत्र प्रभवनशील, सर्वेषां—मित्रादिबन्धूनां, स्थाने—प्रसङ्गे, मम त्वं तदुपकर्तव्यं सर्वं करोषि, यतो दुरुत्तरभवार्णवोद्धरणं जगतोऽपि अशक्यं त्वं संपादयसि—अतः किमन्यैः बन्ध्वादिभिः ॥ ७५ ॥

एवं गाढभक्तिभरोन्मिषितपरामृतचर्वणाघूर्णित आह

जयन्ति मोहमायादि-
मलसंक्षालनक्षमाः ।
शैवयोगबलाकृष्टा
दिव्यपीयूषविप्रुषः ॥ ७६ ॥

मोहः—अख्यातिः आणवं मलम्, माया—मायीयम्, आदिशब्दात् कार्मं च; एषां मलानां सम्यक् चालने—उत्पुंसने शक्ताः शैवयोगबलेन—माहेश्वरसमावेशप्रकर्षेण आकृष्टाः—मायोदरात् हठादेव आनीताः दिव्यपीयूषविप्रुषः—परमानन्दकणा अपि जयन्ति—सर्वोत्कर्षेण वर्तन्ते ॥ ७६ ॥

एवमपि व्युत्थानावसरेषु सर्वदा समावेशायैव परमेश्वरो मे मतीः उद्योगिनीः कारयेत् इति आशंसन् आह

गायत्र्या गीयते यस्य
धियां तेजः प्रचोदकम्।
चोदयेदपि कच्चिन्नः
स धियः सत्पथे प्रभुः ॥ ७७ ॥

कच्चित् इष्टप्रश्ने, यस्य—महेशितुः बोधादित्य-

---

पं० १९ ग० पु० कच्चित् अव्ययमिष्टप्रश्ने इति पाठः।

स्य संबन्धि तेजो—वरेण्यं ज्योतिः, वाक्शक्ति-रूपया गायत्र्या—वेदमात्रा, धियां— सर्वप्रमातृ-मतीनां, चोदकं —तत्तत्कर्तव्याध्यवसायग्राह-कं, गीयते—स्तूयते, स प्रभुः—सर्वत्र प्रभवन-शीलः कश्चित्, अस्माकं व्युत्थानावसरोन्मग्नाः धियः— सर्वाः बुद्धिवृत्तीः, समावेशात्मनि स-त्पथे, परमेश्वरप्राप्त्युपाये, चोदयेत् —न्य-क्कृतान्यव्यापारतया उद्यमं ग्राहयेत्। सत्पथे इत्यस्य च अयमाशयः— यदेवं गायत्र्यैव प्रति-पादितं भगवतो विश्वधीप्रचोदकत्वम् अहरहः पठद्भिः अवबुद्ध्यमानैरपि च मूर्खश्रोत्रियैः ना-वबुद्ध्यते इति तत्कर्तृकैव एषा तेषामसत्पथे चोदना इति ॥ ७७ ॥

अथवा कृतं समावेशप्रार्थनया, स्वाभेदम-य्यां पृथिव्यादिमूर्तावपि माम् एकाग्रधियं कु-र्वाणयापि वा प्रार्थनया, त्वं हि मे प्रसन्नः समा-वेशदशासु मायाकालुष्योपशमनेननिर्मलीभूतस्य तत्सर्वं करिष्यसि — सर्वासु पृथिव्यादिमूर्तिषु

सर्वमयमेव स्वरूपम् अविलम्बितमेव प्रकटयिष्यसि इत्येतदाह

अष्टमूर्ते किमेकस्या-
मपि मूर्तौ न नः स्थितिम् ।
शाश्वतीं कुरुषे यद्वा
तुष्टः सर्वं करिष्यसि ॥ ७८ ॥

पृथिव्यादियजमानान्ताभिः मूर्तिभिः भगवानेव स्थित इति द्वैतस्य नामापि नास्ति इति अष्टमूर्तिपदाशयः। करिष्यसि इति 'क्षिप्रवचने लृट्' ॥ ७८ ॥

युक्ता च इयं संभावना, यतः

वस्तुतत्त्वं पदार्थानां
प्रायेणार्थक्रियाकरम् ।
भवतस्त्वीश नामापि
मोक्षपर्यन्तसिद्धिदम् ॥ ७९ ॥

हे ईश, सर्वेषां तत्त्वभुवंनतदधिष्ठातृरूपाणां प-

द्पार्थानां, निजनिजोचिततत्तदर्थक्रियाक्षमं प्रायेण लोकस्थित्या वस्तुतत्त्वं—परमार्थः, भवतस्तु 'धूर्जटेः नामापि ध्यायताम्' इत्यत्र निर्णीतदृष्ट्या नामापि मोक्षपर्यन्तां महासिद्धिं ददाति इति दण्डैरपूपा व्याख्याताः । प्रायेण इत्युक्त्या लोकस्थित्या एतदुक्तम्, —परमार्थदृष्ट्या हि विश्वस्य भगवन्मयतैव वस्तुतत्त्वम् इति ध्वनति ॥ ७९ ॥

को वा न लोकोत्तरस्तव महिमा इत्याह

मुहुर्मुहुर्जगच्चित्र-
स्यान्यान्यां स्थितिमाहितुम् ।
शक्तिर्या ते तया नाथ
को मनस्वी न विस्मितः ॥ ८० ॥

हे नाथ, गच्छति तां तां स्थावरादिदेवयोन्यन्तां तत्तद्ब्रह्मादिरूपतां च इति जगत्—जीववर्गः, तदेव चित्रं तस्य निःसंख्यस्य, प्र-

तित्त्वणाम् अन्याम् अन्याम् अनन्तशाखां, स्थितिं—संवित्सन्ततिवैचित्रीम्, ऊहितुं—तर्कयितुं निश्चेतुं, या ते—तव सर्वज्ञस्य न तु अन्यस्य कस्यचित्, शक्तिः—सामर्थ्यं, तया त्वदैकात्म्यभावनामयेन प्रशस्तेन मनसा युक्तो मनस्वी, को वा न विस्मितः, सर्व एव विस्मयमहामुद्रोट्टङ्कितरोमाञ्चादिसात्त्विकधर्माभिव्यक्तान्तःप्रस्फुरत्परमानन्दमय एव इति ॥ ८० ॥

किं च

दुष्करं सुकरीकर्तुं
दुःखं सुखयितुं तथा ।
एकवीरा स्मृतिर्यस्य
तं स्मरामः स्मरद्विषम् ॥ ८१ ॥

स्मरद्विषम्—असामान्योल्लेखकारिणं, तं स्मरामः—स्वाभेदेन विमृशामः, यस्य संबन्धिनी स्मृतिरपि भगवतः अन्येन कर्तुमशक्यत्वात् दुष्करं—रुद्रशक्तिसमावेशं सुकरीकर्तुं—हेलामा-

त्रेण संपादयितुं, तथा दुःखं–सकलदुःखनिधानं मायाव्यामोहं सुखयितुं–परमानन्दमयीकर्तुम्, एकवीरा–अनन्यापेक्षसामर्थ्यमयी अप्रतिहता ॥ ८१ ॥

यतश्च एवं-विधानुत्तरसामर्थ्यो भगवान्, अत एव आह

जयन्ति गीतयो यासां
स गेयः परमेश्वरः।
यन्नाम्नापि महात्मानः
कीर्यन्ते पुलकाङ्कुरैः॥ ८२ ॥

महान्–शाक्तपातवशोन्मिषत्समावेशवशात् विकस्वरीकृत आत्मा येषां ते, प्रोक्तनीत्या यदीयेन नाम्नापि व्युत्थानावस्थायां श्रुतिपथगतेन पुलकाङ्कुरैः कीर्यन्ते–पुनरपि समावेश्यन्ते, तदीयम् अन्यत् आस्तां तावत्, तत्परामर्शपराः गीतयोऽपि – स्तुतिसूक्तयोऽपि

जयन्ति सर्वोत्कर्षेण वर्तन्ते ॥ ८२ ॥

न तव उपमानं किमपि अस्तीति अनन्वयालंकारेण आह

भवानिव भवानेव
भवेद्यदि परं भव।
स्वशक्तिव्यूहसंव्यूढ-
त्रैलोक्यारम्भसंहृतिः ॥ ८३ ॥

भव इति प्राग्वत्, स्वासाम् इच्छादिशक्तीनां व्यूहेन—विचित्रगुणप्रधानभावप्रकाशनेन संव्यूढे—निर्वाहिते प्रोक्तरूपस्य त्रैलोक्यस्य आरम्भसंहृती येन, स त्वमेव यदि परं—केवलम् असाधारणम् इत्यर्थः ॥ ८३ ॥

अतश्च

मन्त्रोऽसि मन्त्रणीयोऽसि
मन्त्री त्वत्तः कुतोऽपरः।
स मह्यं देहि तं मन्त्रं
त्वन्मन्त्रः स्यां यथा प्रभो ॥ ८४ ॥

हे प्रभो, यः कश्चित् चतुष्कलनवात्मादिः मननत्राणधर्मा पूर्णाहंविमर्शपरमार्थो मन्त्रः स त्वमेव, तन्मन्त्र्यश्च महाप्रकाशात्मा त्वमेव, अस्य मन्त्रस्य मन्त्र्यस्य च मन्त्रयिता— परामर्शकः त्वमेव, अन्यस्य कस्यचिदपि चिदतिरिक्तस्याभावात्, अतश्च स त्वम् ईदृशः तं मन्त्रं मन्त्रमन्त्र्यमन्त्रयितृरूपं मह्यं देहि— प्रयच्छ, येन त्वमेव प्रोक्तत्रैविध्यात्मा मन्त्रो यस्य तथा स्यां— विगलितमन्त्रमन्त्र्यमन्त्रयितृविभागः त्वदेकमय एव भवेयम्। उक्तं च श्रीकण्ठसंहितायाम्

'पृथङ्मन्त्रः पृथङ्मन्त्री न सिद्ध्यति कदाचन।
ज्ञानमूलमिदं सर्वमज्ञात्वा नैव सिद्ध्यति ॥'

इति ॥ ८४ ॥

यतश्च इदं जातम् इत्याह

भारूपः सत्यसंकल्प-
स्त्वमात्मा यस्य सोऽप्यहम्।
संसारीति किमीशैष
स्वप्नः सोऽपि कुतस्त्वयि ॥ ८५ ॥

यस्य—मम, भारूपः—प्रकाशघनः, सत्य-संकल्पः—तात्त्विकपूर्णाहंविमर्शमयः आत्मा—तत्त्वं सोऽपि अहम् ईदृक्स्फाररूपः, संसारी—संसारावस्थावस्थितिः किम् अहं नैव ईदृक्, अपि तु त्वमेव अयमहं स्फुटमेव स्फुरामि। यत्तु व्युत्थानदशायां समाधिरससंस्कारप्लुतायां किंचिन्मात्रदेहादिप्राधान्येन मनाक् संसारित्वमिव स्फुरति स किं स्वप्नः, स्फुटस्य देहादिप्रमातृत्वस्य अभावे किंचिदेव च आभासेन स्वप्नः संभाव्यते, स च त्वयि चिदेकरूपे न युक्तः, यतः त्वमेव तुर्यतुर्यातीतस्फारमयो मम आत्मा, तत् कस्य स्वप्नो भासतां, तद्वासनाश्रयस्य कस्यापि अभावात्, तत् सर्वथा संसारित्वस्य भ्रान्त्यापि स्फुरणं नास्ति,—इति सदैव शिव एवाहम् ॥ ८५ ॥

यतश्च त्वमेव अहं सर्वथा स्फुरन् स्थितः,

---

पं० ४ ग० पु० संसारावस्थावस्थित इति पाठः।

पं० ६ ग० पु० किञ्चिदेव चाभासनें इति पाठः।

न तु अहं नाम कश्चिदन्यः किंचित् करोमि भुञ्जे वा, तेन इत्थं मिताहंभावप्रशमनेन सर्व-कर्मतत्फलसंन्यासिनां यत् त्वन्मयमेव ऐश्वर्यं तदेव एकं श्लाघ्यम् इति सामान्योक्त्या आह

तदभङ्गि तदग्राम्यं
तदेकमुपपत्तिमत् ।
त्वयि कर्मफलन्यास-
कृतामैश्वर्यमीश यत् ॥ ८६ ॥

अभङ्गि—अनश्वरम् अविभागं च, ग्रामो—रुद्रक्षेत्रज्ञादिसमूहः तत्र भवं ग्राम्यम्—उत्कर्षापकर्षवत्त्वात् अश्लाघ्यम् तत् यत्र न तत् अग्राम्यं—सर्वोत्कृष्टम्, अत एव उपपत्तिमत्—अनन्यमुखप्रेक्षित्वात् सत्यार्थम् ॥ ८६ ॥

एवमीदृशवस्तुतत्त्वपरामर्शोच्छलितः स्वात्मानमेव श्लाघमान आह

पं० १२ ग० पु० सर्वोत्कर्षम् इति पाठः।

क्षमः कां नापदं हन्तुं
कां दातुं संपदं न वा ।
योऽसौ स दयितोऽस्माकं
देवदेवो वृषध्वजः ॥ ८७ ॥

'वृषो धर्मः स देवस्य गुणो वै दृक्क्रियात्मकः
धत्ते स चिदचिद्यस्माद्धर्मस्तेनोच्यते बुधैः ।'

इति श्रीमयोक्तनीत्या वृषो—धर्मो ज्ञानक्रियासामरस्यात्मा ध्वजो—लक्षणं यस्य सः, अस्माकं दयितो—वल्लभः, कीदृक् इत्याह योऽसौ कां न आपदम् अपि तु सर्वां हन्तुं, कां वा संपदम् अपि तु सर्वां दातुं क्षमः ॥ ८७ ॥

अतश्च ईदृशस्य सर्वशक्तेः तव संबन्धिनी भक्तिरेव यथाभीष्टहेतुरित्याह

मायामयमलान्धस्य
दिव्यस्य ज्ञानचक्षुषः ।
निर्मलीकरणे नाथ
त्वद्भक्तिः परमाञ्जनम् ॥ ८८ ॥

माया एव आमयो—व्याधिः, तत्कृतं म-
लम्—आवरणं, तेन अन्धस्य—आवृतप्रकाश-
स्य, दिव्यस्य—लोकोत्तरस्य, ज्ञानचक्षुषः—पू-
र्णप्रथानयनस्य, त्वद्भक्तिरेव परमम् अञ्जनं, नि-
र्मलीकरणे—स्वरूपोन्मीलनविषये ॥ ८८ ॥

अतश्च

निर्भयं यद्यदानन्द-
मयमेकं यदव्ययम्।
पदं देह्येहि मे देव
तूर्णं तत्किं प्रतीक्षसे ॥ ८९ ॥

हे देव, एहि—स्वरूपगोपनां निमज्ज्य सं-
मुखीभव, ततश्च यत् आनन्दमयम् अद्वि-
तीयम् अविनाशि निर्भयं—यस्मिन् सति सं-
सारभयं नास्ति, यद्विषयं च अपसरणाशंका-
भयमपि न भवति, ईदृशं यत् पदं—विश्रा-
न्तिधाम, तत् मह्यं तूर्णं देहि—शीघ्रं मां स्वा-

त्मनि आवेशय, किं प्रतीक्षसे – क्षणमात्रम-
पि मा विलम्बं कृथाः – इति गाढमुत्कण्ठित-
स्य प्रणयनिर्भरोक्तिः ॥ ८९ ॥

पुनरपि भक्तिभरोच्छलित आह

अहो निसर्गगम्भीरो
घोरः संसारसागरः ।
अहो तत्तरणोपायः
परः कोऽपि महेश्वरः ॥ ९० ॥

ब्रह्मादिभिरपि दुस्तरत्वात् निसर्गगम्भीरः, घोरो – दुःखमयः, अत एव सागर इव । कोऽपि इति भक्तिशालिभिरेव लभ्यः चिदेकपरमार्थो निरुपमः पर उपाय इति अनायासमेव झगिति परपारप्रापकः । द्वौ अहोशब्दौ अत्याश्चर्यं ध्वनतः ॥ ९० ॥

आकारपरिग्रहेऽपि असामान्यातिशयवत्त्वं भगवतः स्तोतुमाह

नमः कृतकृतान्तान्त
तुभ्यं मदनमर्दिने।
मस्तकन्यस्तगंगाय
यथायुक्तार्थकारिणे ॥ ६१ ॥

विश्वोपद्रवकरणादुर्मदयोः कालकामयोः निग्रह एव उचितः, देवीकरस्पर्शनोदितस्वनयनजानन्दास्रुस्रुतिमयत्वात् पावनत्वेन जगदुपकारिण्या गंगाया निजे शिरसि धारणानुग्रह एव उचित इति यथायुक्तार्थकारित्वम् ॥ ६१ ॥

यत एवमाकृतिमत्त्वेपि त्वमेव विश्वातिशायी, ततो विश्वातिशायिफलाभिलाषुकाणां त्वमेव शरणम् इत्याह

ऐश्वर्यज्ञानवैराग्य-
धर्मेभ्योऽप्युपरि स्थितिम्।
नाथ प्रार्थयमानानां
त्वदृते का परा गतिः ॥ ६२ ॥

ऐश्वर्यम्—ईशितव्यवस्तुसत्तया स्फीतत्वं, ज्ञानं—हेयोपादेयवस्त्वध्यवसायः, वैराग्यं—विषयवैतृष्ण्यं, धर्मः—सत्त्वगुणोत्कर्षकृतव्यापारदत्तः संस्कारः, तेभ्यो ब्रह्मादिष्वपि कृतपदेभ्यः, उपरि—शुद्धचिदात्मनि, अवस्थितिं प्रार्थयमानानां, त्वमेव गतिः—शरणं, नान्यः अन्येषाम् ऐश्वर्यादिचतुष्टयावृतत्वात् ॥ ९२ ॥

तवैव च अनुत्तरम् ईदृक् ऐश्वर्यं, यस्मात्

त्वय्यनिच्छति कः शंभो
शक्तः कुब्जयितुं तृणम् ।
त्वदिच्छानुगृहीतस्तु
वहेद्ब्राह्मीं धुरं न कः ॥ ९३ ॥

आस्तां सृष्ट्यादिक्रिया, तृणमपि कुब्जीकर्तुं त्वदिच्छां विना न कोऽपि ब्रह्मविष्ण्वादिः शक्तः, त्वच्छक्त्यनुग्रहात्तु ब्रह्मविष्ण्वादिपदं न को वहेत्, कीटोऽपि यावत् वोढुं शक्तः ।

तदुक्तं श्रीस्वच्छन्दे

'ब्राह्मी शक्तिः परस्यैव यत्रेच्छा तत्र पातयेत् ।'

इति । तथा

'वैष्णव्यास्तु स्मृतो विष्णुः.................।'

इति ॥ ६३ ॥

अतश्च

हरप्रणतिमाणिक्य-
मुकुटोत्कटमस्तकाः ।
नमेयुः कं परं कं वा
नमयेयुर्न धीधनाः ॥ ६४ ॥

हरस्य – महेशितुः प्रणतिरेव माणिक्यमुकुटम् – ऐश्वर्यव्यञ्जकं रत्नमयं मुकुटं तेन उत्कटमस्तकाः – उन्नतशिरस्काः, ये धीधनाः – तत्त्वावबोधद्रविणाः, ते कं ब्रह्मविष्णुरुद्रादिकं प्रणमन्ति न कंचित्, अत्यल्पा च इयम् उक्तिः, कं वा ब्रह्मादिकं न नमयेयुः – सर्वमेव स्वप्रणतं संपादयेयुः ॥ ६४ ॥

यत्प्रणामस्य चायं महिमा, तदावेशमेव आशंसन् आह

सर्वविभ्रमनिर्मोक-
निष्कम्पममृतह्रदम् ।
भवज्ज्ञानाम्बुधेर्मध्य-
मध्यासीयापि धूर्जटे ॥ ९५ ॥

हे धूर्जटे – महादेव, भवज्ज्ञानाम्बुधेः – त्वत्प्रकाशसमुद्रस्य, मध्यं – सारभूतम्, अमृत-ह्रदम् – आनन्दमयस्वातन्त्र्यशक्त्यात्मकरूपम् अध्यासीय – कदा तन्मयीभावम् इयाम्, कीदृशम् अमृतह्रदं? सर्वेषां विभ्रमाणाम् – अज्ञानानां निर्मोकेन – त्यागेन यत् निष्कम्प-प्ररूढतया लब्धं, प्रकाशात्मनश्च भगवतो वि-मर्शमयं स्वातन्त्र्यमेव हृदयभूतम् । यदाह स्म श्रीप्रत्यभिज्ञाकारः

'चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥'

इति ॥ ६५ ॥

चित्रसंकल्पादिगतं त्वदाकृतिमात्रमपि भक्तानां कां संपदं न प्रसूते इत्याह

चित्रं यच्चित्रदृष्टोऽपि
मनोरथगतोऽपि वा ।
परमार्थफलं नाथ
परिपूर्णं प्रयच्छसि ॥ ६६ ॥

न कश्चिदपि तावत् चित्रसंकल्पाद्युल्लिखितेन अतात्त्विकेन रूपेण अर्थक्रियां करोति, परमेश्वरः पुनः सर्वसंनिधिः केन नाम न रूपेण भक्तानां परमानन्दविकासं पूर्णं सूते, एवम् इह चित्रसंकल्पस्थं 'नमस्तेभ्योऽपि ये सोम' इति श्लोके स्वप्नगतम् 'उपसंहृतकामाय' इत्यादिना बाह्यनिष्ठं 'किं नासि यत्प्रभो' इत्यादिप्रदेशेषु विश्वमयम् 'भिन्नेष्वपि न भिन्नं यत्' इत्याद्युक्तिषु चिदानन्दघनं भग-

वत्स्वरूपम् अस्य काष्ठाप्राप्तभक्तेः भगवदेक-
मयस्य सर्वेणैव रूपेण परफलप्रदमेव॥ ९६॥

तदित्थम्

को गुणैरधिकस्त्वत्तः
त्वत्तः को निर्गुणोऽधिकः।
इति नाथ नुमः किं त्वां
किं निन्दामो न मन्महे ॥ ९७॥

त्वत्तो गुणैः—सर्वज्ञत्वादिभिः, कोऽधिको—न
कश्चित् 'भवानिव भवानेव भवेद्यदि' इत्या-
द्युक्त्या समोऽपि तव नास्ति इति उक्तम्
तत्कथम् अधिकः स्यात्। त्वत्तश्च कोऽन्यो
निर्गुणः अधिकः— सत्त्वादिगुणसंस्कारेण अ-
स्पृष्टो न कश्चिदन्य इत्यर्थः। इति अनेन उ-
क्तिद्वयेन किं त्वयि निन्दा पर्यवसिता, किं वा
स्तुतिरिति तत्त्वं न विद्मः, अनधिकगुणेषु स-
त्त्वादिगुणयुक्तेष्वपि या निन्दा सा त्वन्मय-
त्वात् विश्वस्य किं त्वय्येव पर्यवसिता, आ-

होस्वित् गुणाधिक्यनिर्गुणत्वाभ्यां स्तुतिः त्वयि विश्वात्मनि परिनिष्ठिता इति महाद्वयमयं त्वाम् उक्तिद्वयं च इदं पर्यालोचयन्तः सन्देहदोलाम् आरूढाः स्मः। वस्तुतो हि त्वयि अपरिच्छेद्यमूर्तौ न काचित् स्तुतिः निन्दा वा अस्ति इति परमार्थः॥ ९७॥

तदलं तावत् एतदुक्तिद्वयविमर्शनेन

कीर्तनेऽप्यमृतौघस्य
यत्प्रसक्तेः फलं तव।
तत्पातुमपि कोऽन्योऽलं
किमु दातुं जगत्पते॥ ९८॥

हे जगत्पते, तव अमृतौघस्य—परमानन्दरूपस्य, कीर्तने—नाममात्रोच्चारणेऽपि, यत् प्रसक्तेः तव त्वदीयान्नैर्मल्यप्रथात्मनः प्रसादात् पूर्णं चमत्कारमयं, फलं तत्पातुम् अविश्रान्त्यन्तर्मुखत्वेन आस्वादयितुमपि न कश्चित् ब्र-

ह्मादिरपि पर्याप्तः, किमु दातुं—वितरीतुं, त्वमेव तद्दातुं क्षम इत्यर्थः ॥ ९८ ॥

तदीदृशात् स्वामिनः परासिद्धिलाभवाञ्छया भक्तिमेव प्रार्थयितुमाह

निःशेषप्रार्थनीयार्थ-
सार्थसिद्धिनिधानतः ।
त्वत्तस्त्वद्भक्तिमेवाप्तुं
प्रार्थये नाथ सर्वथा ॥ ९९ ॥

समस्ताभिलाषितनिष्पत्तिनिधानात्, नाथ—अर्थनीय, त्वत्तः परमेश्वरात्, त्वद्भक्तिमेव सर्वप्रकारम् अर्थये, न तु किमपि फलम् ॥ ९९ ॥

भक्तेः परासिद्धिपर्यवसितत्वं भगवन्नमस्कारमुखेन दर्शयति

नमस्त्रैलोक्यनाथाय
तुभ्यं भव भवज्जुषाम् ।
त्रिलोकीनाथतादान-
निर्विनायकशक्तये ॥ १०० ॥

---

पं० १० क० पु० सर्वप्रकाराम् इति पाठः ।

त्रैलोक्यनाथाय— विश्वेश्वराय, तुभ्यं नमः, यस्त्वं भवज्जुषां — त्वद्भक्तिमतां, पूर्वनिर्णीतत्रिलोकीनाथतादाने — विश्वेश्वरस्वात्मैक्यप्रथने, निर्विनायकशक्तिः— अनर्गलस्वातन्त्र्यः ॥ १०० ॥

अतश्च

निःशेषक्लेशहानस्य
हेतुः क इति संशये ।
स्वामिन्सोऽसीति निश्चित्य
कस्त्वां न शरणं गतः ॥ १०१ ॥

हे परमेश्वर, अविद्याद्यशेषक्लेशप्रशमकारणं किं स्यात् इति संशय्य, सोऽसि ईदृक् त्वमेव इति निश्चित्य, कः त्वां न आश्रितः, सर्वे विवेकिनः त्वाम् अशेषक्लेशनाशनं भजन्ते, इति त्वद्भक्तिरेव त्रिलोकीनाथतादाने इव सर्वक्लेशप्रशमेऽपि हेतुः ॥ १०१ ॥

अत एव

भुक्त्वा भोगान्भवभ्रान्तिं
हित्वा लप्स्ये परं पदम् ।
इत्याशंसेह शोभेत
शंभौ भक्तिमतः परम् ॥ १०२ ॥

शंभौ—चिदानन्दघने, भक्तिभाजो दुर्लभस्य कस्यचिदेव, केवलम् इयम् आशंसा शोभेत। का असौ इत्याह भवभ्रान्तिं हित्वा — निःशेषाम् अख्यातिं परिहृत्य, यथोपनतान् योगप्रभावाकृष्टान् भोगान् भुक्त्वा, परं पदं लप्स्ये-प्राप्स्यामि इति परमाद्वयमये माहेश्वरे नये

'स्थान्युपनिमन्त्रणे संगस्मयाकरणं पुनरनिष्टप्रसंगात'
( पा० ३–५१ )

इत्यन्यशास्त्रनीत्या न कदाचिदपि विदिततत्त्व-

पं० १ क० पु० अतश्च इति पाठः ।
पं० ६ ग० पु० भोगबलाकृष्टान् इति पाठः ।

स्य भोगासंगो बन्धाय भवति। यदुक्तं श्रीस्पन्दे

'तेन शब्दार्थचिन्तासु न सावस्था न यः शिवः
भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः॥'
(३ नि०२का०)

इति॥ १०२॥

तेन

नाथ स्वप्नेऽपि यत्कुर्यां
ब्रूयां वा साध्वसाधु वा।
त्वदधीनत्वदर्पेण
सर्वत्रात्रास्मि निर्वृतः॥ १०३॥

हे नाथ, यत्किंचित् अहं मोहनमये स्वप्नेऽपि मनःकायाभ्यां कुर्यां, ब्रूयां वा वाचा, तच्च साधु—शास्त्रविहितम् इतरद्वा अस्तु, अत्र सर्वत्र अस्मि निर्वृतः—त्वदानन्दमय एव, केन त्वदधीनत्वदर्पेण—त्वमेव चिदात्मा महेश्वरोऽहं सर्वास्वेव अवस्थासु सर्वम् इदं करोमि इति ईदृशेन त्वदायत्तत्वोत्साहेन त्वदभेदावष्ट-

ऽभमयस्य मम न क्वापि कुत्रापि कदाचिद्-
पि कदर्थना इत्यर्थः॥ १०३॥

नहि मम अज्ञानस्पर्शोऽपि अस्ति इत्याह

ज्योतिषामपि यज्ज्योति-
स्तत्र त्वद्धाम्नि धावतः।
चित्तस्येश तमःस्पर्शो
मन्ये वन्ध्यात्मजानुजः॥ १०४॥

हे ईश – स्वतन्त्र, ज्योतिषां – सूर्येन्द्वग्नि-
प्रभृतीनामपि वेद्यरूपाणां, ज्योतिः – प्रकाश-
कं, यत् तस्मिन् त्वदीये धाम्नि – चित्प्रकाशे,
धावतः – अव्यवधानमेव प्रसर्पतः, चित्तस्य
तमःस्पर्शः – अज्ञानसङ्गः, वन्ध्यात्मजानुज
इति मन्ये, वाक्यार्थस्य अत्र कर्मता, वन्ध्या-
याः सुत एव न भवति कथं तु तस्य अनुजः–
कनीयान् भ्राता भवेत्, इत्युक्त्या अत्यन्तासत्त्वं
मम अख्यातेः इति दर्शयति, प्रकृष्टप्रकाशभू-

मौ च तमसो न नामापि भवति इति उचितोक्तिः ॥ १०४ ॥

आस्तां वा त्वत्प्रकाशानुसरणं, त्वद्भक्तौ उत्साहोऽपि मे वरफलप्रसूरित्याह

मन्ये न्यस्तपदः सोऽपि
क्षेम्ये मोक्षस्य वर्त्मनि ।
मनोरथः स्थितो यस्य
सेविष्ये शिवमित्ययम् ॥ १०५ ॥

शिवं – श्रेयोमयं, सेविष्ये – तन्मयीभावेन आश्रयिष्ये, इति ईदृगलौकिकोत्साहमयो यस्य मे संकल्पः, सोऽहं मोक्षस्य – शिवाभेदप्राप्त्यात्मनः अपवर्गस्य, मार्गे – शाक्ते धाम्नि, क्षेम्ये – क्षेमाय परश्रेयसे हिते, न्यस्तपदो– निवेशितनिजज्ञानक्रियाशक्तिचरणः– इति भक्तिविषय उत्साह एवास्य अभीष्टप्रदः संपद्यते।

---

पं० ४ क० पु० वरफलप्रसूतिरिति-पाठः ।

यदुक्तमस्मत्प्रभुपादैः

'उत्तिष्ठ शंकरं स्तौमि पूजयामि महेश्वरम्।
इति संरम्भसंभोगं धन्या एवोपभुञ्जते ॥'

इत्यादि ॥ १०५ ॥

शिवो विश्वोपकरणनित्योदितः स्वयम्, इत्यस्माकमभीष्टं घटितमेव इत्याशयेनाह

स्थित्युत्पत्तिलयैर्लोक-
त्रयस्योपक्रियास्विह।
एकैवेश भवच्छक्तिः
स्वतन्त्रं तन्त्रमीक्षते ॥ १०६ ॥

स्थितिः—नानाभोगसंसङ्गः, उत्पत्तिः—प्रलयेन व्यामूढीकृतानां यथोचितशरीरभुवनादिजननं, लयो—भोगपरम्परानुषङ्गश्रान्तानां विश्रान्तिदानार्थं कंचित्कालं संहारः, तैः विश्वस्य उपकाराय, इह—जगति, हे ईश—स्वामि-

न् ,एकैव—अद्वितीया त्वच्छक्तिः, स्वतन्त्रम्—आत्मायत्तं, तन्त्रं—तन्त्रणं साधनं पश्यति। उक्तं च मृगेन्द्रायाम्

'स्वापेऽप्यास्ते बोधयन्बोधयोग्यान्
रोध्यान्रुन्धन्साधयन्कर्मिकर्म।
मायाशक्तीर्व्यक्तियोग्याः प्रकुर्वन्
सर्वं पश्येद्यद्यथावस्तुजातम् ॥'

इति ॥ १०६ ॥

यथा च स्वेच्छामात्रेण विश्वसृष्टिस्थितिसंहारान् दर्शयसि, तथा त्वमेव अनुग्राह्यान् अनुगृह्णासि इत्याह

त्रिलोक्यामिह कस्त्रात-
स्त्रिताप्या नोपतापितः।
तस्मै नमोस्तु ते यस्त्वं
तन्निर्वाणामृतह्रदः ॥ १०७ ॥

हे त्रातः—संसारभयप्रशमन, इह—जगति

---

पं० ४ क० पु० स्वप्नेऽप्यास्ते इति पाठः

आध्यात्मिकाधिदैविकाधिभौतिकात्मना त्रिताप्या—तापत्रयेण को न तापितः, सर्व एव संतापितः । यदुद्घुष्यते

'आ ब्रह्मणश्च कीटान्तं न कश्चित्तत्त्वतः सुखी ।
करोति तास्ता विकृतीः सर्व एव जिजीविषुः ॥'

इति। अतः ते—तुभ्यमेव तस्मै—असामान्याय कस्मैचित् नमः, यस्त्वं तस्य—विश्वोपतापस्य निर्वाणे—प्रशमने अमृतह्रदः—परमाद्वैतानन्दसमुद्रः॥ १०७॥

त्वद्भक्तेः निःसीमा महिमा इति तत्प्रार्थना अस्माकम् उचितैव इत्याशयेनाह

कृत्रिमापि भवद्भक्ति-
रकृत्रिमफलोदया ।
निश्छद्मा चेद्भवेदेषा
किंफलेति त्वयोच्यताम् ॥ १०८ ॥

कृत्रिमा—बाह्यपूजाध्यानजपादिनिर्वर्त्यापि

या त्वयि महादेवे भक्तिः, सापि अकृत्रिमत्व-त्प्राप्त्यात्मकफलोदयमयी यत्र, तत्र यदि असौ निश्छद्मा—निर्व्याजा बाह्यसाधनानपेक्षा महानु-रागोच्छलिता स्यात्, तत् किंफला? केन फलेन यु-क्ता इति त्वया उच्यतां, जीवन्मुक्त्यात्मत्व-त्समावेशमय्याः त्वद्भक्तेः अतिरिक्तं फलं न कि-मपि कलयितुं शक्यमित्यर्थः ॥ १०८ ॥

अत एव भक्तिशालिनाम्

तच्चक्षुरीक्ष्यसे येन
सा गतिर्गम्यसे यया।
फलं तदज जातं य-
त्त्वत्कथाकल्पपादपात् ॥ १०९ ॥

हे अज, तत् चक्षुः—तदेव प्रकाशकं ज्ञा-नं, येन त्वम् ईक्ष्यसे—साक्षात्क्रियसे, अ-न्यत् तु ज्ञानम् अज्ञानमेव, प्रकाशकत्वधर्म-योगात् चक्षुरत्र ज्ञानम् उच्यते; सा गतिः—

सा सम्यक् प्रवृत्तिः, यया—पूजाजपध्यानात्मना शरीरवाक्चित्तनिर्वर्त्यया त्वं गम्यसे, अन्या तु संसारावटपातिनी इति अगतिरेव; एवं ज्ञानपूर्वक्रियानुष्ठानलभ्यं तदेव सम्यक् फलं, यत् त्वत्कथायाः—त्वत्स्वरूपचर्चायाः सर्वसंपत्प्रदत्वात् कल्पपादपकल्पायाः सकाशात् जातं परमानन्दविकासात्मकम्, अन्यत्तु सर्वं फलं हेयत्वात् अफलमेव ॥ १०९ ॥

अतश्च

श्रेयसा श्रेय एवैत-
दुपरि त्वयि या स्थितिः ।
तदन्तरायहृतये
त्वमीश शरणं मम ॥ ११० ॥

सर्वेषाम्—ईश्वर-सदाशिव-शिवप्राप्तिरूपाणां श्रेयसाम् उपरि—उत्कृष्टत्वेन एतदेव श्रेयः—कल्याणम्, या इयं त्वयि—चिदानन्दघने स्थि-

तिः—विश्रान्तिः, ततश्च तस्मिन् श्रेयसि येऽन्तरायाः—मध्यमध्योत्थिताः त्वदख्यातिस्पर्शाः तेषां हृतये—ध्वंसाय, हे ईश स्वामिन, मम त्वमेव शरणं, तथा कुरु यथा व्युत्थानावसरे न कदाचिदपि माम् अख्यातिः स्पृशति इत्यर्थः ॥ ११० ॥

तदित्थं भगवत्स्वरूपचिन्तनोच्छलितसमावेशरसेन घूर्णमानः सविस्मयमाह

अहो स्वादुतमः शर्व-
सेवाशंसासुधारसः।
कुत्र कालकलामात्रे
न यो नवनवायते ॥ १११ ॥

शर्वसेवाया—महादेवभक्तेः या इयम् आशंसा—'सेवेयं शिवम्' इति प्रार्थना सैव सुधा— अमृतं तस्य रसः—चमत्करणम्, अहो—चित्रं स्वादुतमः—परं स्पृहणीयतया च-

णामपि त्यक्तुम् अशक्यः, यः कुत्र—कस्मिंश्चि-
त्कालस्य कलामात्रेऽपि—अंशमात्रेऽपि, न नव-
नवायते—अपि तु प्रतिक्षणं नवनवचमत्का-
रमय एव, न तु इतररसवत् अनवरतास्वा-
दनेन वैरस्यम् आवहति ॥ १११ ॥

यत्सेवाशंसाया इयान् महिमा, सः

मुहुर्मुहुरविश्रान्त-
त्रैलोक्यं कल्पनाशतैः।
कल्पयन्नपि कोऽप्येको
निर्विकल्पो जयत्यजः ॥ ११२ ॥

प्रतिक्षणं तत्तत्प्रमातृप्रमेयाभाससंयोजन-
वियोजनक्रमेण अविश्रान्तः—अविरत एव

'तदेवं व्यवहारेऽपि प्रभुर्देहादिमाविशन्।
भान्तमेवान्तरर्थौघमिच्छया भासयेद्बहिः ॥'

इति प्रत्यभिज्ञाकारिकानिरूपितार्थस्थित्या रु-
द्रक्षेत्रज्ञादिसर्वप्रमातृभूमिकानिष्ठं भवाभवा-

तिभवरूपं त्रैलोक्यं कल्पनाशतैः—भङ्गीसहस्रैः, कल्पयन्—सदा पञ्चविधकृत्यवैचित्र्येण आभासयन्नपि यो निर्मलस्वतन्त्रप्रकाशचिदेकपरमार्थ एव असौ अजो जयति—सर्वोत्कृष्टो वर्तते, कल्पनाशतयुक्तश्च कथं निर्विकल्प इति विस्मयः। कोऽपि एक इति असामान्यः ॥ ११२ ॥

स्तुत्युचितां प्रार्थनामाह

मलतैलाक्तसंसार-
वासनावर्तिदाहिना।
ज्ञानदीपेन देव त्वां
कदा नु स्यामुपास्थितः ॥ ११३ ॥

हे देव, त्वां कदा—कस्मिन् काले, उपस्थितः—त्वदभेदाविश्रान्त्यात्मकत्वदर्चापर एव भवेयं, केन ज्ञानं—तत्त्वावबोध एव दीपः तेन, न तु बाह्यकुसुमादिना। तदुक्तं श्रीवि-

ज्ञानभैरवे

'पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः॥'

इति। कीदृशेन ज्ञानदीपेन, मलम् – अख्यातिः तदेव वासनावर्तीनां स्निग्धताधायकत्वात् तैलमिव तेन अक्ताः सिक्ताः या वासनाः – विचित्राः धर्माधर्मादिसंस्काराः त एव वर्तमानत्वात् स्वयं वेष्टनाभिः उत्थाप्यमानत्वात् वर्तयः ताः दहति अवश्यं यः तेन ॥ ११३॥

एतत्प्रार्थनापूरणं च तव भगवन् हेलामात्रमेव इत्याह

निमेषमपि यद्येकं
क्षीणदोषे करिष्यसि।
पदं चित्ते तदा शंभो
किं न संपादयिष्यसि॥ ११४॥

हे शंभो, त्वदिच्छयैव क्षीणदोषे – निवृ-

त्तकुप्राचीनसंस्कारे चित्ते, मादृशाम् अनुग्राह्याणां यदि क्षणमेकमपि पदम्—अनुग्रहीतृत्वेन अधिष्ठानं करिष्यसि, तदा किं न संपादयिष्यसि— सर्वाः प्रार्थनाः तत्क्षणं पूरयस्येव। तदुक्तं श्रीमृत्युजिद्भट्टारके

'निमेषोन्मेषमात्रं तु तत्त्वं यद्युपलभ्यते।
ततः प्रभृति मुक्तोऽसौ न पुनर्जन्म चाप्नुयात्'॥

इति॥ ११४॥

अतश्च

धन्योऽस्मि कृतकृत्योऽस्मि
महानस्मीति भावना।
भवेत्सालम्बना तस्य
यस्त्वदालम्बनः प्रभो॥ ११५॥

धनेन— त्वदभेदज्ञानरूपेण समृद्धः धन्यः अहमेव, तथा कृतं—संपादितं कृत्यं—परपुरुषार्थप्राप्तिलक्षणं येन तादृक् अहमेव, तथा

महान् — सर्वातिशायी अहमेव, न तु भेदेश्वरावस्थितः इति एषा भावना — प्रतिपत्तिः, तस्य—कस्यापि, सालम्बना — सदर्था भवति । यः त्वदालम्बनः—त्वं महेश्वर एव आलम्बनं शरणं यस्य ॥ ११५ ॥

परमेश्वरादपि तद्भक्तेरुत्कर्षं दर्शयति

शुभाशुभस्य सर्वस्य
स्वयं कर्ता भवानपि ।
भवद्भक्तिस्तु जननी
शुभस्यैवेश केवलम् ॥ ११६ ॥

हे ईश — स्वतन्त्र, न केवलं त्वत्प्रयुक्तो ब्रह्मादिः स्वोचितस्य शुभाशुभस्य कर्ता, यावत् स्वयं भवानपि सर्वस्य शुभाशुभस्य—विद्यामायात्मनो जगतः, कर्ता—जनयिता, भवद्भक्तिस्तु त्वदभेदप्रथात्मनः शुभस्यैव परं जननी इति भवद्भक्तियुक्ते स्वात्मनि बहुमानः ॥ ११६ ॥

इदानीं निरपेक्षो भवच्छक्तिपात एव चिदानन्दघनस्वात्मसमावेशमयभक्तिभाजो जनान् संपादयति, न तु कर्मसाम्यमलपरिपाकादिहेतुकोऽसौ, नापि भवच्छक्त्यधिष्ठानात् मलस्य क्रमेण परिपाक इत्येतत् श्लोकद्वयेन आह

प्रसन्ने मनसि स्वामि-
न्किं त्वं निविशसे किमु ।
त्वत्प्रवेशात्प्रसीदेत्त-
दिति दोलायते जनः ॥ ११७ ॥

निश्चयः पुनरेषोऽत्र
त्वदधिष्ठानमेव हि ।
प्रसादो मनसः स्वामिन्
सा सिद्धिस्तत्परं पदम् ॥ ११८ ॥

( युगलम् )

हे स्वामिन्, मनसि—संवेदने, प्रसन्ने—प-

रिपक्कमले संजातकर्मसाम्ये वा सति, किं त्वं निर्विशसे – स्वशक्त्यधिष्ठानं करोषि, उत त्वत्प्रवेशात् – शक्त्यधिष्ठानात् तत् प्रसादं गच्छेत् – मलपरिपाकादिकम् आसादयेत् इति जनो दोलायते – संदेग्धि। अत्र पुनरयं निश्चयः, यत् त्वदधिष्ठानं – स्वरूपगोपनानिमज्जनेन त्वत्स्वतन्त्रशक्त्युन्मीलनमेव केवलं मनसः–संवेदनस्य प्रसादो, न तु मलपरिपाककर्मसाम्यादि किंचित्; तथा हि यदि मलपरिपाकः शक्तिपातस्य हेतुः कर्मसाम्यं वा, तदपि तर्हि किंहेतुकं? समाधिष्ठात्री भगवच्छक्तिः इति,तद्धेतुकमिति चेत् अलंतेन, भगवच्छक्तिरेव स्वतन्त्रानुग्राहिका भविष्यति, अहेतुकमिति चेत् सर्वस्य युगपत् किं न भविष्यति, कस्मिंश्चित्काले भवति, इति चेत् सर्वेषां बन्धकोटेः अनादित्वात् कालनियमः किं न कृतः, किं कुर्मः, तत् कदाचित् कस्यचित् कथञ्चित् भवति, इति चेत् मलस्य स्वशक्त्या निरोधकत्वे

न अवास्थितस्य जडस्य विजातीयकारणानुप्रवेशं विना परिपाकलक्षणविलक्षणकार्यजननानुपपत्तिः। कश्चिदेव कालोऽत्र सहकारिकारणम् इति चेत्, कोऽसौ इति प्रश्ने नोत्तरं लभ्यते। परिणमन्मलः परिपाकात्मकं विशेषमेति, इति चेत् अत्रापि दुग्धदधिपरिणाम इव उष्णस्पर्शस्य विरोधिनः कारणस्य अननुप्रवेशे विलक्षणपरिणामानुपपत्तिः। यथा स्वतन्त्रशक्तिपातवादिपक्षे कर्मभोगवैचित्र्यं मुक्तिश्च कालनियमेन, भगवदेककर्तृके च जगति मायाकालादीनां क्रमेण कार्यकारणभावः, तथैव एतद्भविष्यति इति चेत् चाशपश्वाशन्याय आयातः, यतः तत्पक्षे भगवानेव स्वातन्त्र्यात् गृहीतसंकोचाभासो यथा तत्तत्त्वात्मना भाति, तथा तद्गतनियतपौर्वापर्यात्मककार्यकारणभावाभासात्मनापि नियतकर्मतत्फलवैचित्र्यात्मनापि क्रमाभासमयेन, न तु अत्र कालकर्मादेः कस्यापि निजं तत्त्वम् अस्ति इ-

ति यथा असौ इत्थं भोगवैचित्र्यम् आभासय-
ति, तथा स्वस्वातन्त्र्यात् अनुग्रहवैचित्र्यम-
पि, इति नात्र निग्रहानुग्रहभाक् कश्चित् अ-
न्योऽस्ति इति निरवद्य एवायं पक्षः । मलप-
रिपाकादिपक्षस्तु उक्तदूषणैः सावद्य एव--इति
कथमिव संभावनासाम्यमात्रेणाभ्युपगन्तुं श-
क्यम्, क्रमिके च विरुद्धे द्वे समबले कर्मणी
कथं युगपत् फलदानेऽपि समबलत्वात् वि-
रुद्धत्वाच्च तयोः प्रतिबन्धात् फलदानाशक्तत्वे
जातु शक्तिपातः स्यात् । कथं वा तस्मिन् अ-
वसरे कर्मान्तरं फलं न ददाति, तस्य भिन्न-
कालार्जितस्य भिन्न एव परिपाककाल इति
चेत् तयोरपि भिन्नकालार्जितयोः कथम् एक-
कालः परिपाकः । ईश्वरेच्छात इति चेत् सैव
भगवती स्वतन्त्रानुग्राहिका अस्तु; अलम्
अनेन आलजालप्रायेण मलपरिपाकादिना ।
वितत्य च एतत् मयैव श्रीस्वच्छन्दविवृतौ प-
ञ्चमपटलान्ते दीक्षासमर्थनावसरे विचारितम् ।

यथा च आगमेषु मलस्वरूपं, यथा च एत-न्निवृत्तिः भवति तदपि तत्रैव निर्वाहितम् इति अलम् इह अभ्यधिकेन, तदेतत् गर्भीकृत्य स्तोत्रकारेण उक्तम् । 'निश्चयः पुनरेषोऽत्र' यत् त्वच्छक्त्यधिष्ठानमेव, मनसः—संवेदनस्य प्रसादः न तु मलपरिपाकाद्यपि, त्वदधिष्ठानमेव च सिद्धिः तदेव परं पदमिति। इदमत्र तत्त्वं, यच्चितिशक्तिरेव भगवती स्वस्वातन्त्र्यात् गृहीतसंकोचा चित्तभूमिं संसार्यात्मरूपां बहुशाखामाभास्य, पुनः स्वेच्छयैव क्वचित् संकोचं प्रशमय्य, पूर्णतया स्फुरति इत्येव तत्परं पदम् । यदुक्तं केनचिन्महायोगीन्द्रेण

'चैतन्यपूरितमिदं निखिलं हि विश्वं
चित्तं चिदात्मनि यदास्तमुपैति शश्वत् ।
एवं चितेरपृथगेव सुसंस्थितत्वा-
दुक्तो निरस्तकरणः परमः समाधिः ॥'

इति ॥ ११८ ॥

एवं भगवत्स्वरूपं नानाविधाभिः सूक्ति-

भङ्गीभिः स्तुत्वा, सर्वदशासु अविचलैव भग-
वन्मयता अस्तु इति आशंसन् आह

वचश्चेतश्च कार्यं च
शरीरं मम यत्प्रभो।
त्वत्प्रसादेन तद्भूया-
द्भवद्भावैकभूषणम् ॥ ११९ ॥

त्वत्स्तुतौ यदि वचो मम त्वद्भावनामयं
संपन्नं, तथा सदैव अस्तु, तच्च चित्तसहचारि,
चित्तं च शरीराश्रयम् इति तद्द्वारेण तदपि ते-
षां वपुश्चेतःशरीराणां यत्किंचित् अर्थाभिधा-
नाचिन्तनपरिस्पन्दनादि कार्यं तत् सर्वं मम
प्रभो– चिदानन्दघन स्वामिन्, त्वत्प्रसादेन–
त्वदीयेन स्वरूपगोपनाप्रशमनानैर्मल्यगमनेन
नित्यमेव, भवद्भावः – त्वन्मयत्वमेव एकं भू-
षणं यस्य तादृशं स्यात् ॥ ११९ ॥

भक्तिमतां शरणादिप्रवृत्त्यर्थं प्रसिद्धप्रभाव-

स्वनामोदीरणपूर्वं स्तोत्रस्य उत्कर्षं दर्शयति उपसंहारभङ्ग्या

स्तवचिन्तामणिं भूरि-
मनोरथफलप्रदम् ।
भक्तिलक्ष्म्यालय शंभो-
र्भट्टनारायणो व्यधात् ॥ १२० ॥

महामाहेश्वरत्वेन प्रसिद्धप्रभावः नारायणाख्यो भट्टः, शंभोः— चिदानन्दघनस्वात्मप्रत्यभिज्ञानात्मकानुग्रहकारिणो भगवतो महादेवस्य, स्तवं — स्तोत्रमेव चिन्तामणिं विहितवान्, कीदृशं भूरीणां मनोरथानां यत् फलं—भगवत्समावेशलक्षणं महाफलं तत् प्रददाति यः तं, यतो भक्तिरेव महेश्वरैकात्म्यमयत्वात् लक्ष्मीः— परा संपत् तस्याः आलयं— नित्यं निवासभूमिम् । एतत्स्तोत्रश्रवणपठनादिना परा समावेशलक्ष्मीः आलिङ्गति नित्यमेव भक्तिभाज इति शिवम् ॥ १२० ॥

गुणादित्याज्जातो गुणगणगरिष्ठः शिवगुणैः
कृतामोदो बाल्यात्प्रभृति गतसंगो जगति यः ।
स शूरादित्यो मां बहु बहुलभक्त्यार्थयत यत्
स्तुतौ तेनाकार्षं विवृतिमिह नारायणकृतौ ॥ १ ॥

श्रीरामेण कृतात्र सद्विवृतिरित्येषा किमर्थेति मा
सन्तश्चेतसि कुध्वमस्ति विवृतौ कोऽपि प्रकर्षोऽत्र यत् ।
तेनार्थिप्रणयाद्दिनैस्त्रिचतुरैर्यां क्षेमराजो व्यधात्
क्षेत्रे श्रीविजयेश्वरस्य विमले सैषा शिवाराधनी ॥२॥

शंभोः प्रकाशवपुषः शक्तिरेका जयत्यसौ ।
या स्फुरन्त्येव तनुते परामृतमयं जगत् ॥ ३ ॥

———:0:———

इति श्रीमहामाहेश्वराचार्यवर्यश्रीभट्टनारायणविरचितः स्तवचिन्तामणिः समाप्तः ।

---

विवृतिश्चात्र तत्रभवत्स्तुतिसूक्तिकारप्रशिष्यमहामाहेश्वराचार्यवर्यश्रीमदभिनवगुप्तपादपद्ममधुपराजस्य राजानकक्षेमराजस्य

---

सद्विद्यानां संश्रये ग्रन्थविद्वद्-
व्यूहे ह्रासं कालवृत्त्योपयाते ।
तत्तत्सद्धर्मोद्दिधीर्षैकतान-
सत्प्रेक्षौजःशालिना कर्मवृत्त्यै ॥ १ ॥

श्रीमत्कश्मीराधिराजेन मुख्यै-
र्धर्मोद्युक्तैर्मन्त्रिभिः स्वैर्विवेच्य ।
प्रत्यष्ठापि ज्ञानविज्ञानगर्भ-
ग्रन्थोद्धृत्यै मुख्यकार्यालयो यः ॥ २ ॥

तत्राजीवं निर्विशद्भिर्मुकुन्द-
रामाध्यक्षत्वाश्रितैः सद्भिरेषः ।
पूर्त्या शुद्ध्या व्याख्यया संस्कृतः स्तात्
पूर्णो ग्रन्थः श्रेयसे सज्जनानाम् ॥ ३ ॥ तिलकम् ।

---

श्रीशिवार्पणं समावेशनिर्वाणावहं च श्रोतृ-पाठकजनानां भूयात् ॥



अयं ग्रन्थः
'पंडित विश्वनाथ एंड सन्स
फोटाग्राफर्स प्रोप्राइटर्स इत्यादि'
इत्येतैः स्वकीये
'कश्मीर प्रताप स्टीम प्रेस श्रीनगर'
इत्याख्याख्याते
मुद्रणायन्त्रे सम्मुद्रितः

SRINAGAR
Printed by P. VISHI NATH & SONS Photographers and Proprietors of
"Kashmir Pratap Steam Press"
Published By THE RESEARCH DEPARTMENT.
*Srinagar Kashmir.*

अथ

स्तवचिन्तामणौ श्लोकानामकारादिक्रमानुक्रमणिका

# प्रथमपरिशिष्टम्।

इति श्रीस्तवचिन्तामणौ श्लोकानामकाराद्यनुक्रमणिका समाप्ता ॥

# स्तवचिन्तामणौ

## द्वितीयपरिशिष्टम् ।

### मूलश्लोकानां संक्षेपेण विषयार्थसंग्रहः ।

१ विकल्पमयवैखरीमध्यमाप्रशमनपूर्वकं पश्यन्तीदशामुन्मज्जयतस्तद्द्वयाभिक्रामनाश्रितदशामपि वेद्यत्वेनाभासयतः परमानन्दात्मकपराद्वयप्रमातृतामुन्मीलयतः स्वात्मपरमार्थपरमेश्वरस्य स्वरूपसमावेशविमर्शनम् ।

२ पूर्वोक्तस्वरूपस्यैव परमेश्वरस्य शक्तिप्राधान्येन स्तवनम् ।

३ सदाशिवेश्वरादिना वेद्यपर्यन्तेन पराद्वैतप्रथानुप्रविष्टेन विश्वात्मना रूपेण प्रसरज्ज्ञानक्रियाशक्तेः प्रकाशात्मनो नरप्रधानभगवत्स्वरूपस्य प्रह्वीभावेन विमर्शनम् ।

४ तत्तद्द्वेष्यस्तुत्याद्यवस्थास्वपि भगवदनुग्रहात् तदभेदप्रथात्मिकाया विभूतेरासादनकथनम् ।

५    वासनाप्लोषयुक्त्यैवाख्यातिप्रशमनपूर्वकं पाशक्षपणपूर्णस्वरूपप्रथनेन स्वात्मरूपमहेश्वरस्य अनुग्राह्यानुग्रहसमावेशार्थनम् ।

६    वैशेषिकाभ्युपगतपरापरसामान्यव्यतिरिक्तसर्वसामान्यपूर्णाहन्तात्मकमहाचैतन्यरूपपारमेश्वरस्वरूपविमर्शनं नमस्करणमुखेन ।

७    अनुपलभ्यमूर्तित्वादतिसूक्ष्मत्वेऽपि शक्त्यण्डपर्यन्तसमस्तजगद्व्यापकस्य चित्प्रकाशधर्मभगवत्स्वरूपस्याभिवन्दनम् ।

८    विश्वसृष्टिसंहारात्मकहानसमादानधर्मत्वेन उपचरितहंसस्वरूपस्य परमेश्वरस्यैवान्तरभेदेन धृतब्रह्माण्डगर्भोन्मनारूपहंसीशक्तिपरामर्शनम् ।

९    उपादानादिकारणासत्त्वे शून्यभुव्येव जगच्चित्ररचनात्मातिदुर्घटकर्मणोऽव्याहतस्वातन्त्र्यपरमेश्वरविषयस्वात्मसमावेशनम् ।

१०    मायासंपर्करहितत्वेन स्वच्छशिवज्ञानस्य परमेश्वरात् प्रार्थनम् ।

११    मेयपदे प्रमाणगम्यत्वेऽपि वस्तुतोऽभेदरूपतया प्रमाणव्यापारातीताय परमेश्वराय शरीरप्राणपुर्यष्टकादिसमर्पणरूपबलिनिवेदनम् ।

१२ गांभीर्यादिगुणतया दुर्बोधायाः शुद्धप्रकाशप्रशमिताख्यातितिमिरायाः पारमेश्वरमायाशक्तेर्दर्शनाकांक्षणम् ।

१३ भक्त्युद्रेकवशात् स्वप्नेऽपि साकारपरमेश्वरप्रणामतत्परेभ्यः प्रणमनम् ।

१४ पारमेश्वरं स्वरूपं प्रत्यक्षम्रष्टुं जन्ममरणोन्मूलनशक्ताया रुचेर्बुद्धिमतामत्यभिलषणीयतातिदेशनम् ।

१५ परमेश्वरप्रसादात् यावज्जीवितावस्थं तदेकाग्रमनस्कतया स्थितेः प्रार्थनम् ।

१६ अनन्तशाखाविस्तीर्णवेदागममयत्वेन तत्तत्फलोत्पादककल्पवृक्षरूपशंभोरभिवन्दनम् ।

१७ वाङ्मनःकायनिर्वर्त्यसमस्तकर्मणो भगवति समर्पणात् तत्तादात्म्येन तद्वन्निर्द्वन्द्वताया आशंसनम् ।

१८ जगद्विषयकसृष्टिसंहारादिनियोगेषु निजस्वातन्त्र्यशालिताप्रशंसितशंभवे प्रणमनोक्तिः ।

१९ निस्त्रैगुण्यमहाप्रकाशात्मभगवन्नाममात्रचिन्तनेनाभीष्टावाप्तेरन्यालम्बनानां ध्यानानां निष्प्रयोजनताकथनम् ।

२० भगवद्वाचकमहामन्त्रसत्तानुप्रविष्टानां शांभवविभूतिचमत्करणोद्युक्तताकथनम् ।

२१ सर्वस्यैव कायवाङ्मनोविषयस्य भगवन्मयत्वात् भक्तिमतामप्रयासमेव भगवत्स्वरूपलाभकथनम् ।

२२ भगवद्विषयकस्य शरीरमनोवाङ्निर्वर्त्यार्चनध्यानादिरागस्योत्तरोत्तरवर्धनाशंसनम् ।

२३ आकृतिमत्त्वेऽपि तात्त्विकस्वरूपापरित्यागात् सर्वसंविदां स्थिरपूर्णाहन्तात्मनि विश्रान्तिप्रदस्य भगवतोऽभिवन्दनम् ।

२४ अज्ञानरूपतिमिरप्रशमोपायभूतस्वस्मृतिप्रदानोत्तरं प्रह्वविषयनैर्मल्याश्रयणप्रार्थनम् ।

२५ भोगापवर्गसंसाधकभगवत्प्रणामस्यापि प्रणम्यतया समाश्रयणीयत्वकथनपूर्वकं भगवदभिवन्दनम् ।

२६ दुरुत्तरभवाम्भोधिमग्नानां तदुत्तरणोपायभूतायाः सर्वाभीष्टप्रदभक्तेर्भगवत एवासादनोत्तरं भोगमोक्षात्मसंपूर्णेष्टावाप्तेरनुशासनम् ।

२७ केषांचिदेव लोकोत्तराणां भगवत्तत्त्वज्ञानादख्यात्यपगमोत्तरं निश्चलपरमाद्वैतज्ञानलाभानुशंसनम्

२८ निर्गुणस्य निष्कामस्यापि भगवतो ज्ञानात्मकतद्गुणावभासिनां भक्तानां ज्ञेयतया तत्तद्भोगमोक्षात्मपार्यन्तिकफलतया सर्वोत्कृष्टत्वेन परामर्शनम् ।

२९ श्रीरत्नामृतादिनिदानभूतक्षीरोददानेन भगवतोऽसामान्यैश्वर्यप्रकर्षकथनम् ।

३० -- श्रुतिस्मृत्यात्मानुचारोपायभक्तिमात्रेण भोगापवर्गफलदात्रे परमेश्वराय प्रणमनम् ।

३१ सर्वज्ञः सर्वकृत्सर्वमयश्च परमेश्वर एव इतीदृशज्ञानशालिनां सर्वं ज्ञेयं कार्यं च भगवता वैश्वात्म्येनानुभाव्यते इत्यनुशासनम् ।

३२ विश्वस्य यदीयेच्छामात्रेण निष्पत्तिस्तस्य भगवतः कार्यज्ञानं ब्रह्मादीनामपि दुरूहमिति निर्देशनम् ।

३३ तत्तत्प्रयत्नशतानुष्ठानेनापि ब्रह्मादिकारणानामप्यलभ्यधाम्नः परमेश्वरस्य प्रणमनम् ।

३४ ब्रह्मादयोऽपि यच्छक्तिविकासभङ्गिभूताः तस्मात्परमेश्वरात्पालनार्थनम् ।

३५ परमेश्वरस्य महाव्यापकतया दुर्ज्ञेयत्व-दुष्प्राप्यत्वकथनमुखेन स्तवनम् ।

३६ भक्तिशालिनां स्तुतिस्मृत्याद्यवस्थासु तदभेदावष्टम्भमयताधिगमात् तत्कालतः परमानन्दस्फारफलोद्भावकाय परमेश्वराय नमस्करणम् ।

३७ सृष्ट्यादिकारिपरिमितब्रह्मादिपदविषयकस्मयपरित्यागात् भक्तानां भगवत्स्वरूपप्रत्यभिज्ञावशोन्मिषितसर्वाहंभावरूपमहास्मयग्रहणेन परिपूर्णतया स्फुरणानुशासनम् ।

३८ भक्तिशालिनां भगवच्चैतन्यानन्दविश्रान्त्या विकल्पात्मकव्युत्थानदशाया अपि समाधिरसपरिप्लुतताकथनम् ।

३९ अतिसूक्ष्मरूपत्वे सर्वस्याखिलोक्यास्तत्कलामात्रत्वेन दर्शनात्, स्थूलरूपत्वे ब्रह्मादिभिरपि दुर्लक्ष्यत्वात्, सर्वथैव अपरिच्छेद्यमूर्तेर्भगवतस्तात्त्विकरूपविषयातर्क्यताया भङ्ग्या प्रतिपादनम् ।

४० सर्वशास्त्राणां शब्दराशिशरीरतात्त्विकपरमेश्वरस्वरूपप्रतिपादनतात्पर्यसत्तया प्रेक्षावतां प्रवृत्तिविषयत्वानुकीर्तनम् ।

४१ तात्त्विकानायासयादृशक्रमकर्मबुद्ध्यादिना परमेश्वरज्ञानविषयोपदेशात्मप्रसादाभ्यर्थनम् ।

४२ स्वयमनुपकार्यत्वे विश्वोपकारकतया निःस्पृहत्वे सर्वस्पृहणीयतया लोकोत्तरोत्कर्षशालिभगवतोऽभिवन्दनम् ।

४३ अपरिच्छिन्नपारमेश्वरस्वरूपप्राप्तिफलकभक्त्यधिष्ठानभूतायाः क्षेत्रज्ञतायाः सामान्योक्त्या श्लाघनम् ।

४४ भगवत्स्वरूपनिधिप्रापिकायां भक्तौ विमुखानां दुरतिक्रमभगवन्माययैव व्यामोहितताप्रतिपादनम् ।

४५ सर्वत्र परमेश्वरस्यैव मुख्यं कर्तृत्वमन्येषां तु तदुत्थापिततत्वादभिमानमात्रसतत्त्वमिति प्रतिपादनं स्तुतिमुखेन ।

४६ गुणत्रयकार्यभूतसुखदुःखादिद्वन्द्वमग्नजगदुद्धरणाय ऋते परमेश्वरमन्यस्य शक्तिः कृपा वा नास्तीति प्रतिपादनम् ।

४७ भगवदैक्यभावनाभावाभावयोरेव गुणिनां गुणवत्तया दुष्टानां दोषवत्तया निदर्शनम् ।

४७ (२) सर्वथान्यविषये त्यागप्रार्थनोत्तरं भगवद्विषययोरेव रागलोभयोरप्यभ्यर्थनम् ।

४८ स्वर्गफलकाग्निष्टोमाद्यधिकारिनियमनवैशिष्ट्येन मुक्तिफलके निरायासभगवद्भावनात्मके कर्मणि सर्वस्य जन्तुमात्रस्याधिकारानुशासनम् ।

४९ भोगापवर्गफलकसमस्तकर्मणामादिमध्यावसानेषु भगवत्संविल्लग्नत्वादेशनम् ।

५० अतिसेवनाद्विरस्यावहेतरास्वादनीयविषयवैशिष्ट्येन भगवद्भक्तिसुधाया एवोत्तरोत्तरसेवनान्नवनवचमत्कारप्रदत्वादुत्कृष्टमहिमादेशनम् ।

५१ कामसंहरणादिविश्वातिशायिकार्यवैचित्र्यकारितया आकृतिमत्त्वेऽपि अतिदुर्घटैश्वर्यशालिपरमेश्वरविषयप्रणमनम् ।

५२ मायाख्यामोहनास्वातन्त्र्यापत्त्या किंचित्कर्तुमशक्तजन्तुवर्गस्य तत्त्वणाच्छक्त्यापादिपारमेशानुग्रहशक्तेरेव शरणाख्यानम् ।

५३ स्वतन्त्रचिदेकमूर्तेः परमेश्वरस्य सर्वत्र निष्प्रतिद्वन्द्विताकथनम् ।

५४ भगवदात्मकत्वान्निरस्तसमस्तोपाधीनां जीवानां मोहापादितया मायायाः प्रभावातिशयद्योतनम् ।

५५ अणिमादिसिद्ध्यवाप्त्यचलैश्वर्याधिगमभवविरतिफलानां भगवद्भक्तिकल्पपादपस्यैव प्रभवत्वादेशनम् ।

५६ सर्वदेशकालव्यापकतया लब्धेऽपि भगवत्स्वरूपे सूक्ष्मतमदेहादिसंस्कारगलनाय तदात्मसाद्भावस्य पुनराशंसनम् ।

५७ सन्मानसानिवासि-भूतिसिताङ्गमहाहंसरूपाय शंभवे पुनरपि भक्तिभरेण नमस्करणम् ।

५८ अशेषतमोऽपहरणभवकदर्थनेन्धनदाहभगवत्स्वरूपभूतमहाप्रकाशननिदानभगवद्भक्तिदीपिकाया अभ्यर्थनम् ।

५९ भगवत एव विश्वसर्जनादिनाटकप्रस्तावनोत्तरं तत्संहरणात्मनिर्वहणकृत्यक्षमकवितानुशासनम् ।

६० सदसतोरसत्त्वसत्त्वसंपादनस्वतन्त्रस्य जगदुत्पत्तिविनाशनैश्वर्यशालिनो भगवतोऽभिवन्दनम् ।

६१ आनन्दसागरात्मभगवतो विश्ववर्तियावन्मात्रानन्दस्यैकबिन्दुरूपकथनोत्तरं नमस्करणम् ।

६२ भगवद्वाचकमहामन्त्रविमर्शनैकताननतया ब्रह्मादीनां धन्यत्वानुशासनम् ।

६३ स्वयं निरीहस्यापि भक्तेष्टसंपादकतया, अद्वयात्मत्वेऽपि भोग्यभूतविश्वचमत्कर्त्रे भगवतेऽभिवन्दनम्।

६४ सर्वकारणकारणाद्भगवत एव ब्रह्मादिकीटान्तानां सर्वेष्टसिद्ध्याप्त्यावेदनम्।

६५ निश्चेतुमशक्यजगद्विचारादिप्रयोजनसंकटेषु मायास्फारमलिनीकृताया बुद्धेः तत्स्मरणमात्रेण प्रसादाधिगमात्तत्त्वज्ञानसामर्थ्यानुशासनम्।

६६ इच्छामात्रेणैव विश्वोदयप्रलयकृत्सामर्थ्यस्य भगवत एवाभङ्गुरप्रभुशक्त्यावेदनम्।

६७ भगवदभेदभावनासत्तासत्तयोस्तदुद्देशेन विहितस्य निषिद्धस्यापि सुकृतता, तदनुद्देशेन विहितस्य सुकर्मणश्च दुष्कृतता-इत्येवमनुशासनम्।

६८ सततोदितभगवत्समावेशात्मभक्तिरसास्वादरूपद्रविणयुतानां भगवत्स्वात्मीकरणसाक्षात्करणादिविकल्पैः परामर्शनाद्धन्यत्वनिर्देशनम्।

६९ परमानन्दविश्रान्तिप्रदवेदात्माज्ञानियोक्तुः, तथा तदृगादिवेदत्रयपरामर्शनीयतेजोरूपादप्युत्तीर्णस्य परमेश्वरस्य स्तवनम्।

७० परमेश्वरस्यैव विश्ववर्तिवेदोदितविधिनिषेधात्मविचित्रस्वभावपरिस्पन्दप्रवर्तकत्वप्रतिपादनम्।

७१ ज्ञानानन्दाच्छादनोत्तरं भ्रान्त्युद्भूत्या भेदासक्तान्संमोह्य पश्चाच्च भ्रान्त्यपनयनोत्तरं ज्ञानानन्दाविष्कृत्यानुग्राह्येष्वनुग्रहशीलस्य भगवतोऽभिवन्दनम् ।

७२ ब्रह्मादीनामपि अशक्यपर्यन्तगतेर्मायायाः स्वरूपोन्मेषमात्रेणापहर्तुः परश्रेयःस्वरूपपरमेश्वराद्ख्यात्यपाकरणरूपस्वरक्षाभ्यर्थनम् ।

७३ विषयवैतृष्ण्यभाजां, विश्वमयविश्वोत्तीर्णतादिरूपस्वात्माद्वयज्ञानाधिरूढानां च, तथोक्तज्ञानसंपत्प्राप्त्युपायमन्त्रमुद्राध्यानादिवैमुख्यभाजां च भगवत एव तत्तत्कर्मप्रभुतावेदनोत्तरं तत्स्वरूपोन्मेषमात्रेण मायापहृत्याशंसनम् ।

७४ वेदान्तोपास्यब्रह्मणोऽपि स्वातन्त्र्यशक्तिमयत्वेन उत्कृष्टस्य, ईश्वराणामपीश्वरस्य, कल्याणानामपि कल्याणस्य परमेश्वरस्यावेद्यत्वकथनम् ।

७५ बन्धुमित्रादिभ्य उपरतानां भक्तानां भगवत एव दुरुत्तारभवार्णवादुद्धरणोपकर्तृसद्बन्धुत्वनिर्देशनम् ।

७६ निःशेषमलापहरणसमर्थतया परमेशसमावेशाकृष्टानां परमानन्दकणानां सर्वोत्कृष्टतापरामर्शनम् ।

७७ निखिलप्रमातृमतीनां प्रेरकं यस्यैव वरेण्यं ज्योतिर्गायत्र्या स्तूयते, स प्रभुरस्माकं व्युत्थानमग्ना

धियः स्वस्वरूपप्राप्त्युपायात्मसत्पथे उद्यमं ग्राहय-
त्वित्येवमाशंसनम् ।

७८ स्वाभेदमयीषु पृथिव्याद्यष्टमूर्तिष्वेकस्यामप्येकाग्र-
बुद्ध्याशंसनसंज्ञया तत्क्षणात्सर्वमयस्वरूपप्रकटनफ-
लकभगवत्प्रसादाभ्यर्थनम् ।

७९ तत्त्वभुवनतदधिष्ठातृरूपनिखिलपदार्थानां प्रायेण
निजनिजक्रियाक्षमत्वमनूद्य भगवन्नामस्मरणमात्रस्य
मोक्षपर्यन्तसमस्तसिद्धिप्रदत्वाभिख्यानम् ।

८० प्रतिक्षणं ब्रह्मादिकीटान्तनवनवानवच्छिन्नजगच्चि-
त्रनिर्माणशक्त्यैव भगवतस्तदैक्यमयभावनामनस्वि-
नामतिविस्मयरूपसमावेशकथनम् ।

८१ दुष्करुद्रशक्तिसमावेशस्य सुखेन संपादकं, मा-
याव्यामोहस्य परमानन्दमयकर्तृ यत्स्मरणमात्रं तस्य
भगवतः स्वाभेदेन विमर्शनोत्कृष्टतानुशासनम् ।

८२ भगवत्स्तुतिसूक्तीनां व्युत्थानेऽपि आनन्दातिश-
यात्मसमावेशजनकत्वेन सर्वोत्कृष्टत्वकथनम् ।

८३ इच्छादिशक्तिनिर्वाहितत्रैलोक्यारम्भसंहृत्योर्भगव-
तोऽनौपम्यनिर्देशनम् ।

८४ मन्त्र-मन्त्र्य-मन्त्रिणां भगवदभिन्नत्वमनूद्य तत्स्वं-
रूपाभेदात्मसत्परामर्शार्थनम् ।

८५ स्वात्मनः प्रकाशैकात्मसत्यसंकल्पभगवत्स्वरूपाभिन्नतामनुभूय संसारित्वस्य स्वप्नकल्पतयाप्यसंभवत्ताकथनम् ।

८६ यत्तच्छेदबुद्ध्यपगमोत्तरं भगवति निखिलकर्मतत्फलसंन्यासिनामतिश्लाघ्यैश्वर्यभागित्वानुशासनम् ।

८७ सर्वापदपहरणसर्वसंपद्दानसमर्थभगवद्वाल्लभ्याधिगमे भक्तानां स्वात्मश्लाघनम् ।

८८ मायाव्याध्यन्धीकृतज्ञानचक्षुषः पूर्णप्रथानयनात्मारोग्यापादिभगवद्भक्तेः परमाञ्जनतया निरूपणम् ।

८९ गाढोत्कण्ठावशात्क्षणमात्रासहनविरावणोत्तरं निर्भयानन्दाद्वयाव्ययभगवत्पदाधिगमाभ्यर्थनम् ।

९० ब्रह्मादिभिरपि दुस्तरस्य गभीरदुःखमयभवसागरस्य तात्पर्येण भगवदुपासक्तेस्तरणोपायतयाशंसनम् ।

९१ जगद्विघातदुर्मदकालकामयोर्निग्रहणेन, पतितपावनतया जगदुपकर्त्र्या गङ्गायाः शिरोधृत्या च, आकारधारित्वे भगवत एव यथोचितकारिताशंसनम् ।

९२ ब्रह्मादिवत्त्यैश्वर्यादिपदचतुष्कोत्कृष्टशुद्धचिदात्मस्थित्यर्थिनां भगवत एव तद्दातृतया परायणानुशासनम् ।

९३ भगवदनिच्छया ब्रह्मादीनामपि तृणकुब्जीकरणासामर्थ्यस्य, तथा तदिच्छानुगृहीतकीटादेरपि ब्राह्मपदोद्वहनसामर्थ्यस्य निर्देशनम् ।

९४ महेश्वरप्रणामासक्त्यात्मामूल्यरत्नभरितमुकुटोन्नतशिरस्कतया तत्त्वावबोधात्तयद्रविणानां देवेष्वपि स्वप्रणतसंपादनसामर्थ्यसंभूत्यनुशासनम् ।

९५ सर्वमोहत्यागोत्तरं प्रकाशात्मकभगवद्विमर्शानन्दस्वातन्त्र्यशक्त्यासादनामृताशंसनम् ।

९६ चित्रदृष्टमनोरथोल्लिखितस्यातात्त्विकत्वेऽपि भगवदाकृतिमात्रस्य भक्तजनसर्वेष्टसंपत्प्रदातृत्वकथनम् ।

९७ परमेश्वरादन्यस्य गुणाधिक्यादर्शनात् तथा नैर्गुण्यादर्शनाच्च पक्षद्वयव्याजस्तुतिनिन्दयोः पर्यवसानानिश्चयनाख्यानम् ।

९८ भगवत्कीर्तनजन्यामृतास्वादनेऽपि अन्यस्य देवादेरसामर्थ्यसूचनोत्तरं भगवत एव तदमृतदानसामर्थ्यसूचनम् ।

९९ इतरकामानभीप्सया सर्वेष्टसिद्धिनिधेर्भगवतः परसिद्धिलाभात्मतदेकान्तभक्त्याशंसनम् ।

१०० स्वभक्तेभ्यः स्वात्मैकप्रथनात्मत्रैलोक्यस्वाम्यदा-

नेऽनर्गलस्वातन्त्र्यौदार्यैभगवतोऽभिवन्दनम् ।

१०१ सर्वदुःखापहरणहेतुः कः ? इति संदिह्य परमेश्वर एव तादृगिति निश्चिनुतां तच्छरणताकथनम् ।

१०२ भगवद्भक्तिमतामेव योगप्रभावाकृष्टसांसारिकभोगोपभोगोत्तरमख्यात्यात्मभवभ्रान्तिं हित्वा परपदावाप्त्याशंसनौचित्यानुशंसनम् ।

१०३ भगवदद्वयात्मतया तदायत्तानां मोहमयीषु स्वप्नाद्यवस्थास्वपि कृतस्य यत्तत्पुण्यापुण्यात्मकर्मणः परानन्दफलजनकतावेदनम् ।

१०४ परप्रकाशात्मभगवद्धामनिष्ठचित्तस्य तमःसंपर्कात्यन्ताभावकथनम् ।

१०५ परमशिवसेवोत्साहाय कृतमनोरथमात्रस्यापि मोक्षपदे पदन्यासानुशासनम् ।

१०६ नानाभोगासञ्जनात्मस्थित्या, यथोचितशरीरभवनजननात्मोत्पत्त्या भोगपरम्परानुषङ्गश्रान्तानां विश्रान्तिदानायेषत्कालं संहारात्मलयेन च जगदुपकरणे पारमेशाद्वयशक्तेः परमस्वातन्त्र्यावेदनम् ।

१०७ आध्यात्मिकाधिदैविकाधिभौतिकात्मत्रितापतापितसमस्तप्राणिनां तापशमनामृतह्रदतानिरूपणोत्तरं भगवतोऽभिवन्दनम् ।

१०८ सव्याजपूजाध्यानजपादिनिर्वर्त्यभगवद्भक्तेर्मोक्षफलजनकत्वानुवादोत्तरं निर्व्याजभगवदनुरागोच्छलिततत्समावेशोपलक्षितभक्तेरनिर्वचनीयफलत्वेनापरिमेयफलत्वसूचनम् ।

१०९ चक्षुषो भगवल्लिङ्गादिप्रेक्षणे, गतेश्च भगवत्पूजादिस्थानगमने, भगवत्कथात्मसर्वेष्टप्रदकल्पपादपजन्यफलस्य च शब्दार्थद्वारा साफल्यमावेद्य, ज्ञानस्य भगवत्स्वरूपज्ञापकतया, योगादिगतेश्च भगवत्पदप्रापकतया सर्वसंपत्प्रदकल्पपादपरूपभगवत्स्वरूपचर्चायाः समुद्भवत्परानन्दविकासात्मकफलस्य च श्लाघ्यसाफल्यावेदनम् ।

११० निखिलैश्वर्याप्त्यात्मश्रेयसामुत्कृष्टश्रेयोभूतचिदानन्दघनविश्रान्त्यै मध्यत उद्भवद्भगवदख्यात्यात्मान्तरायध्वंसाय भगवच्छरणताभ्यर्थनम् ।

१११ उत्तरोत्तरास्वादने नवनवचमत्कारजनकतया क्षणमपि त्यक्तुमशक्यस्य भगवद्भक्त्यमृतरसस्याशंसनम् ।

११२ तत्तत्प्रमातृप्रमेयाभाससंयोजनवियोजनक्रमेण रुद्रक्षेत्रज्ञादित्रैलोक्यं कल्पनाशतैरनवरतं कल्पयतोऽपि भगवतो निर्विकल्पावस्थया स्थित्यावेदनम् ।

११३ त्रिमलात्मतैलमलिनसंसारवासनावर्तिदाहितत्त्वाववोधात्मदीपावलम्बनोत्तरं परमेशसंनिधौ स्वोपस्थितिक्षणाशंसनम् ।

११४ भगवदनुग्रहेणैव प्रक्षीणपूर्वतनकुत्सितसंस्कारे चित्ते क्षणमात्रमपि परमेश्वराधिष्ठानस्य सर्वाभीष्टसंपादकत्वानुशासनम् ।

११५ भगवदाश्रितजनस्यानुत्तरधन्यत्वकृतकृत्यत्वमहत्त्वादिगर्वाणां वास्तवशोभित्वावेदनम् ।

११६ परमेश्वरस्य मिश्रशुभाशुभफलजनकत्वं, तद्भक्तेस्तु शुद्धोत्कृष्टशुभफलजनकत्वमनूद्य भक्तिमतां बहुमानमान्यतावेदनम् ।

११७–१८ किं मलापगमेन प्रसन्नं मनो भगवताधिष्ठीयते, उत भगवदधिष्ठानेन मलापगमात् प्रसन्नतामासादयेत् ! इति शङ्कनपूर्वकं भगवदधिष्ठित्यैव मलहान्या प्रसन्नमनसः सर्वसिद्ध्याप्तिपरपदासादनानुशासनम् ।

११९ वाङ्मनःकर्मकायानां भगवदनुग्रहासादनोत्तरं भगवद्भक्तिभूषणभूषितत्वाभ्यर्थनम् ।

१२० ग्रन्थकृतः प्रसिद्धप्रभावस्वनामोदीरणोत्तरं स्वकृतग्रन्थस्य भगवत्समावेशात्मानुत्तरैश्वर्यफलप्रस-

वतया चिन्तामण्यभिख्यापनेनात्यन्तोपादेयतानिर्देशनम् ।

---

इति स्तवचिन्तामणौ ग्रन्थप्रकाशक-पं० मुकुन्दराम शास्त्रिणा विरचितः प्रतिश्लोकं प्रतिपादितार्थसङ्क्षेपः समाप्तः ॥

---

द्वितीयपरिशिष्टभागश्च समाप्तः ॥